कर्त्तव्यम्। ततः 'अश्वो रूपम्', 'ऊर्जः पृथिव्याः', 'गायत्रिया ह्रियमाणस्य यत्ते' 'देवानां ब्रह्मवादम्' इति द्वाभ्याम्, 'यया ते सृष्टस्य', 'यत्ते सृष्टस्य', 'यत्ते तान्तस्य', 'यत् पर्यपश्यत्' इति क्रमेणाश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षाणां शकलानि पद्मपत्रञ्चेति सप्त वानस्पत्यान् सम्भारान् सम्भरेत्। एवमेतान् पार्थिवान् वानस्पत्यांश्च सम्भारान् सम्भृत्य तान् तूष्णीमेकस्थान् कृत्वा 'यं त्वा सम्भरन्'[1] इति मन्त्रेण निदध्यात्। निधानानन्तरं बौधायनमतेन नान्दीश्राद्धं कर्त्तव्यम्। इदं नान्दीश्राद्धमापस्तम्बीयानां न नित्यम्, आपस्तम्बेनाविधानात्।

### आधाननक्षत्राणि

तदनन्तरमाधानकालौपयिकानि नक्षत्राणि सूत्रकारेणाभिधीयन्ते। यदि ब्राह्मणः कृत्तिकानक्षत्रे आधानं कुर्यात् तदा स ब्रह्मवर्चसिनां प्रथमो भवति। यदि रोहिण्यामादधीत तदा सर्वत्र गौरवास्पदं भवति। यो यजमानो ब्रह्मवर्चसकामो यज्ञकामो वा भवेत् स मृगशीर्षे आदधीत। यः पूर्वं धनवान् सन् इदानीं दरिद्रो जातः स पुनर्वस्वोराधानं कुर्यात्। यो यजमानः 'प्रजा मे दानकामाः स्यु'रित्यभिलषति स पूर्वयोः फल्गुन्योरादधीत। एतादृशकामनाभावे तु पूर्वफल्गुन्योराधानकरणे दरिद्रो भवति। यश्च सुभगो भोजनशक्तश्च भवामीति आत्मानं कामयते स उत्तरफल्गुन्योराधानं कुर्यात्। एतदेव पूर्वोत्तरफल्गुन्योरुक्तं कामद्वयं विपर्यस्तमेके समामनन्ति। मतान्तरेण तु पूर्वफल्गुन्योराधाय दरिद्रो भवति, उत्तरफल्गुन्योराधाय धनवान् भवतीति। यस्तु 'मह्यं जनैः प्रदीयेते'ति कामनावान् भवेत् स हस्तायामाधानं कुर्यात्। 'हस्तो लाभकामस्य'[2] इति सूत्रयन् कात्यायन इदमेव मतं सूचितवान्। राजन्यो भ्रातृव्यवान् वा चित्रायामादधीत। अत्र राजन्यस्य चित्रा नित्या भवतीति वेदितव्यम्। प्रजाकामो विशाखयोः, ऋद्धिकामोऽनुराधेषु, पुष्टिकामः श्रवणे, प्रतिष्ठाकामश्चोत्तरेषु प्रोष्ठपदेषु आधानं कुर्युः। कामविहितान्यपि

---

१. 'यं त्वा सम्भरन् जातवेदो यथा शरीरं भूतेषु न्यक्तम्। स सम्भृतः सीद शिवः प्रजाभ्य उरु नो लोकमनुनेषि विद्वान्' इति समग्रो मन्त्रः।

२. का० श्रौ० ४।७।३

एतानि नक्षत्राणि आपस्तम्बमते नित्यानि भवन्ति। आश्वलायनोऽपि कृत्तिकारोहिणीमृगशिरःफल्गुनीप्रोष्ठपदेति नक्षत्रनामान्यभिधाय एतेषामेकस्मिन्नक्षत्रेऽग्न्याधेयं कर्त्तव्यमित्यभिप्रैति। कात्यायनस्तु[1] आधानस्य नक्षत्रचतुष्टयं विधत्ते।

आधानकालः

एवमाधाननक्षत्राण्युक्त्वा पर्वणोराधानं विधास्यंस्तत्र फल्गुनीपौर्णमास्याधाने कञ्चन विशेषं सूत्रकारः प्रदर्शयति। यदि यजमानः फल्गुनीपूर्णमासे आदध्यात्तदा एतमग्निं संवत्सरमास्ये आदध्यात्। अतः पर्वणः प्राग् द्व्यहे एकाहे वा कालेऽग्निराधेयः। भारद्वाजस्तु[2] या पूर्वाभ्यां फल्गुनीभ्यां पौर्णमासी स्यात्र तस्यामादधीतेत्याह। अत्र पर्वनक्षत्रयोः समुच्चय आपस्तम्बाभिमतो द्रष्टव्यः। अमावास्यायां पौर्णमास्यां वाधानं कर्त्तव्यमिति पर्वणो नक्षत्रस्य च विकल्पोऽपि सूत्रकारेण प्रदर्शितः। इदं कल्पद्वयमाश्व[3]लायनाभिप्रेतमिति तदीयवृत्तिकारो नारायणो वदति। तत्र ब्राह्मणस्य वसन्तर्तुरेवाधानकालः, ग्रीष्मो हेमन्तो वा क्षत्रियस्य, शरद् वैश्यस्य, वर्षा रथकारस्य। त्रैवर्णिकान्तर्भूताः स्ववृत्तिकर्शिता ये रथं कुर्वन्ति तेषां वर्षर्तुरेवाधानकालो बोध्य इति सूत्रकाराभिप्रायः। इदं तु मीमांसकमतविरुद्धम्[4]। आश्वलायनस्तु आपस्तम्बवद् ब्राह्मणस्य वसन्तर्तुमाधानकालमभिधाय क्षत्रियस्य वैश्यस्य उपकृष्टस्य च यथाक्रमं ग्रीष्मवर्षाशरद आधानकालत्वेन विदधाति। शीततुः वर्णत्रयसाधारणो वेदितव्य इत्यापस्तम्बाशयः। अत्र भारद्वाजोऽपि[5] अविकलमापस्तम्बमतं स्वकीयत्वेनोपन्यस्यति।

ततः सोमपूर्वाधाने कञ्चन विशेषं सूत्रकारः प्रदर्शयति। यश्चाधानानन्तरं सर्वकर्मभ्यः प्राक् सोमयागसङ्कल्पं कुर्यात् स सोमकालानुरोधेनाधानं कर्त्तुमृतुं नक्षत्रं च नाद्रियेत। आश्वलायनोऽपि एवमाह—'अद्यैव सोमेन यक्ष्ये' इति

१. का० श्रौ० ४।७।२

२. भा० श्रौ० ५।२।८

३. आ० श्रौ० सू० २।१।११

४. रथकाराधिकरणं द्रष्टव्यम् ( पू० मी० ६।१।१२ )। का० श्रौ० १।१।८

५. भा० श्रौ० ५।२।५

सङ्कल्प्य य आधानमिच्छेत् स आधानस्य कालं नापेक्षेत, सोमोपक्रमकाल एवादधीत।

इदमाधानं नियतमिति प्रतिपादयितुं पुनरपि आपस्तम्ब आह, यश्च गृहे नियतवासं करोति स गृहाद्ग्रामान्तरं गत्वा तत्राप्यादधीत। यश्च स्थिरतया न कुत्रापि वसति स यदा यत्र वसति तत्रैवाधानं कुर्वीत। अथवा यायावरोऽपि[1] एकाहप्रयाणेनोदवसायादधीत।

अग्न्यायतननिर्माणम्

तदनन्तरमाहवनीयाद्यग्नीनामायतननिर्माणं कर्त्तव्यम्। तदर्थम् 'उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु। शिवा नः सन्तु प्रदिशश्चतस्रः शन्नो माता पृथिवी लोकसाता' इति मन्त्रेण प्राचीनप्रवणं[2] देवयजनमुद्धत्य 'शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः' इत्यद्भिरवोक्ष्य तस्मिन् देवयजनस्थाने उदीचीनवंशं[3] गार्हपत्यशरणं कुर्यात्। तस्य शरणस्य पृष्ठवंशादधस्तनं देशमग्रेण गार्हपत्यायतनं भवति। तस्माद् गार्हपत्यस्थानात् पश्चिमतः अष्टसु प्रक्रमेषु[4] अतीतेषु ब्राह्मणस्याहवनीयायतनं कुर्यात्। एवमेकादशसु प्रक्रमेषु राजन्यस्य, द्वादशसु च वैश्यस्य कुर्यात्। त्रयाणां वर्णानामाहवनीयायतननिर्माणप्रकारमभिधाय सामान्यतो निर्माणप्रकारं सूत्रकार उपदिशति—चतुर्विंशतिप्रक्रमेषु, अपरिमिते वा देशे, यावता देशेन यथोक्तान् प्रक्रमान् चक्षुषा परिच्छिनत्ति तस्मान्नातिदूरं वाधेय इति। तदेतद्विधित्रयं सर्वेषां वर्णानामविशेषेण श्रूयते। भारद्वाजोऽपि[5] इदं विधित्रितयं प्रदर्शयति। गार्हपत्यागारात् पृथगेवाहवनीयागारं कर्त्तव्यम्। तयोरेवान्यतरत्र

१. नित्यं गमनशीलः, यात्वा यत्र कुत्रापि वसति। न स्थिरतया क्वचिद्वसतीति रुद्रदत्तः। बौधायनसूत्रे त्वन्यथा लक्षणमुक्तम्—'शालाश्रयत्वाच्छालीनत्वम्। वृत्त्या वरया यातीति यायावरत्वम्' (बौ० ध० ३।१।३) इति।

२. यो देशः प्राच्यां दिशि प्रवणो निम्नः स देशः प्राचीनप्रवणः।

३. यस्मिन् गृहे मध्यमो वंशः (यस्मिन् इतरे वंशाः प्रोता वर्त्तन्ते) उदीचीनाग्रस्तद्गृहमुदीचीनवंशं शरणमिति।

४. प्रक्रमो द्विपदः, पदं पञ्चदशाङ्गुलमिति बौधायनः, द्वादशाङ्गुलमिति कात्यायनः (का० शु० ५।९)

५. भा० श्रौ० ५।२।१६-१८

दक्षिणाग्न्यायतनम्। तत आहवनीयाग्नेः पुरस्तात् सभ्याग्नेः स्थानं कुर्यात्। तस्य पुरस्तादावसथ्याग्नेः स्थानं प्रकल्पयेत्। अनेनैव प्रकारेण पञ्चानामग्नीनामायतननिर्माणं भवति। अयं निर्माणप्रकार आश्वलायनेन नाभिहितः। ततो यजमानः केशश्मश्रुवापनं नखनिकृन्तनं च कारयित्वा स्नात्वा क्षौमे वस्त्रे परिदध्यात्। एवं यजमानपत्न्यपि केशवर्जं नखकर्त्तनादि परं कारयित्वा स्नात्वा क्षौममेव वस्त्रं परिदधीत। गार्हपत्यादिषु सर्वेष्वाधीयमानेषु कर्माधिकारे जायापती क्षौमे वसानौ सन्निहितौ भवतः। परिहिते क्षौमवस्त्रे आधानपरिसमाप्तौ दक्षिणात्वेन अध्वर्यवे देये। भारद्वाजोऽपि[1] अत्रापस्तम्बमतं स्वीयत्वेन कीर्त्तयति।

## ब्राह्मौदनिकाधानम्

तदनन्तरं ब्राह्मौदनिकाधानं[2] सूत्रकारेण कर्त्तव्यतया विहितम्। तदर्थमध्वर्युरपराह्णे यजमानस्यौपासनाग्नेरर्धं पृथक्कृत्य तं गार्हपत्याग्नेः पश्चान्निधाय तत्र ब्राह्मौदनिकमादध्यात्। अयमर्धाधानपक्ष[3] इत्युच्यते। सर्वाधानपक्षे तु सर्वमौपासनाग्निं ब्रह्मौदनपाकार्थं गृह्णीयात्। भारद्वाजेन[4] तु अयं सर्वाधानपक्षो नोक्तः। तत्र सर्वाधानपक्षे पुनरौपासनशेषाभावान्मथिताग्नाविव ब्रह्मौदनपाकादिकं पुनराधाने कुर्यात्। सर्वाधाने यवमयं व्रीहिमयञ्च द्वावपूपौ

१. भा० श्रौ० ५।२।२४

२. ब्राह्मणानामृत्विजां भोजनाय उपयुक्तः पक्व ओदनो ब्रह्मौदनः। तस्य पाकार्थं क्रियमाणमाधानं ब्राह्मौदनिकाधानम्।

३. अर्धाधानमेवासर्वाधानशब्देन व्यवह्रियते। 'क्षौमे वसानावग्निमादधीयाताम्' इति विध्यनुसारं यजमानस्तत्पत्नी च क्षौमवस्त्रे धारयन्तौ वैवाहिकमौपासनाग्निं प्रज्वाल्य ततोऽर्धमग्निं पृथक्कृत्य तत्र ब्रह्मौदनपाकादिकं सम्पाद्य तमग्निं संवत्सरपर्यन्तं संरक्ष्य तत्र अरणिप्रतपनं यथाविध्यनुष्ठाय तमग्निमुद्वाप्यारणी मथित्वा मथिताग्निना गार्हपत्याधानं कुर्यात्। अवशिष्टमौपासनाग्निं गार्ह्यकर्मानुष्ठानाय परिरक्षेत्। इदमसर्वाधानमित्युच्यते। सर्वमप्यौपासनाग्निं ब्रह्मौदनपाकार्थं गृहीत्वा, पाकानन्तरमरणी प्रतितप्याग्निमुद्वाप्य, अरणी प्रमथ्य ततो निष्पन्नेनाग्निना गार्हपत्यादेराधानं कुर्यात्। इदं सर्वाधानमित्युच्यते। अयं सर्वाधानपक्षः कलौ निषिद्धः। यदुक्तं लौगाक्षिणा—'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः। सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया॥' इति।

४. भा० श्रौ० ५।३।१

उदुम्बरपर्णाभ्यां पृथक् संगृह्य, ब्राह्मौदनिकायतने यवमयमपूपं पश्चात् व्रीहिमयं च पुरस्तात् क्षिप्त्वा तत्रौपासनाग्निं स्थापयेत्। सर्वमपि औपासनाग्निमाहृत्य अपूपौ तत्र क्षिपेदित्यपरे मन्यन्ते। ततो ब्राह्मौदनिकस्य पश्चात् प्राचीनग्रीवे उत्तरलोम्नि रक्तवृषभचर्मणि, पाजके[1] वा, निशायां चतुःशरावपरिमितान् व्रीहीन् यवान् वा ब्रह्मौदनपाकार्थं निर्वपेत्। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां ब्रह्मणे प्राणाय जुष्टं निर्वपामि' इति मन्त्रेण प्रथमं निर्वपेत्। तदनु 'ब्रह्मणेऽपानाय' इति द्वितीयम्, 'ब्रह्मणे व्यानाय' इति तृतीयम्, 'ब्रह्मणे जुष्टम्' इति च चतुर्थं निर्वपेत्। तूष्णीं वा चतुर्मुष्टिनिर्वापः कर्त्तव्य इति मतान्तरमपि सूत्रकारेणोपन्यस्तम्। निर्वापानन्तरं तान् तण्डुलान् चतुर्षु जलपूर्णपात्रेषु निक्षिप्य पचेत्। दुग्धे वा श्रपणं कर्त्तव्यम्। अत्र प्रक्षालनं प्रस्रावणं च निषिद्धम्। पाकावसरे यथा भक्तेषु तण्डुलांशोऽल्पोऽवशिष्येत तथा पक्तव्यम्। ततो ब्रह्मौदनमुद्वास्य[2] दर्व्या गृहीत्वा 'प्रवेधसे कवये'[3] इति मन्त्रेण तस्मिन्नेवाग्नौ यजमानो जुहुयात्, तमभिमन्त्रयेत वा। अत्र होम एव भारद्वाजाभिमतो[4] नाभिमन्त्रणम्। ततस्तं ब्रह्मौदनं चतुर्धा विभज्य पृथक् पात्रेषु निक्षिप्य तदुपरि प्रभूतं घृतमासिच्य चतुर्भ्य ऋत्विग्भ्योऽध्वर्य्वादिभ्यः[5] प्रयच्छेत्। तत्र्त्विग्भिः प्रथमे ग्रासा गृहीता भवन्ति। पात्रेषु अप्रतिहताश्च पाणयो भवन्ति। एवं स्थितेऽध्वर्युः ब्रह्मौदनशेषं संकृष्य तस्मिन्नाज्यशेषमानीय तदन्नं तिसृभिरार्द्राभिः सपलाशाभिः प्रादेशमात्राभिः फलवतीभिः अश्वत्थसमिद्भिरालोड्य, आलोडनसमये 'चित्रियादश्वत्थात्' इति मन्त्रं पठित्वा ताः समिधस्तस्मिन्नेवाग्नौ निदध्यात्। तत्र ब्राह्मणः

---

१. पाजको नाम विदलनिर्मितं महानसोपकरणमिति रुद्रदत्तः। मृत्तिकानिर्मितः शराव इति केचनाहुः।

२. अग्नेर्बहिः निःसार्य स्थापनमुद्वासनम्।

३. 'प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्त्वव देवान् यजे हेड्यान्' इति समग्रो मन्त्रः।

४. भा० श्रौ० ५।३।९

५. अत्राध्वर्युहोतृब्रह्माग्नीध्रा एव चत्वार ऋत्विजः।

'समिधाग्निं दुवस्यत'[1] 'उप त्वाग्ने'[2] 'तं त्वा समिद्भिः'[3] इति तिसृभिर्गायत्रीच्छन्दस्काभिरृग्भिरादध्यात्। एवं राजन्यः 'समिध्यमानः', 'घृतप्रतीकः', 'आयुर्दा अग्ने'[4] इति त्रिष्टुब्छन्दस्काभिरृग्भिः, वैश्यस्तु 'त्वामग्ने' 'त्वामग्ने प्रदिवः' 'घृतप्रतीकम्'[5] इति जगतीच्छन्दस्काभिरृग्भिरादध्यात्। ततः समित्सु आदधत्सु अध्वर्यवे तिस्रो वत्सतरीर्दद्यात्[6]। ततो ब्राह्मणा ऋत्विज ओदनं भुञ्जीरन्। प्राशितवद्भ्य ऋत्विग्भ्यः समानमेव वरं दद्यात्। इदं च समिदाधानं यस्मिन्नहनि अग्न्याधानं चिकीर्षति तत एकस्माद् वत्सरात् पूर्वं द्वादशाहात् द्व्यहात् त्र्यहात् पूर्वं वा, पूर्वस्मिन्नेव वा दिने कर्त्तव्यम्। अग्न्याधानं कुर्वता यजमानेन प्राक् समिदाधानमवश्यं कर्त्तव्यम्। 'अनाहितस्तस्याग्निरित्याहुः यः समिधो नाधायाग्निमाधत्ते' इति श्रुतिवचनमेवात्र प्रमाणम्।

## व्रतचरणम्

तदनन्तरं यजमानस्य व्रतचरणं विहितम्। यजमानो मांसभक्षणं स्त्र्युपगमनञ्च न कुर्यात्। यजमानगृहादन्ये अग्नेराहरणं न कुर्युः, यजमानो वान्यत आहरणं न कुर्यात्। संवत्सरं व्याप्य ब्राह्मौदनिकेनाग्निनासीत। औपासनाग्निश्चेदाहितस्तर्हि तस्मिन्नेवाग्नौ नित्यनैमित्तिकानि कर्माणि क्रियन्ते।

---

१. 'समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन् हव्या जुहोतन' इति समग्रा ऋक्।

२. 'उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम' इति समग्रा ऋक्।

३. 'तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य' इति समग्रा ऋक्।

४. 'समिध्यमानः प्रथमो नु धर्मः समक्तुभिरज्यते विश्ववारः। शोचिष्केशो घृतनिर्णिक् पावकः सुयज्ञो अग्निर्यजथाय देवान्' 'घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतमस्यान्नम्। घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन् सुयजा यक्षि देवान्' 'आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रमभिरक्षतादिमम्' इति राजन्यस्य त्रयो मन्त्राः।

५. 'त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम्। उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति' 'त्वामग्ने प्रदिव आहुतं घृतेन सुम्नायवः सुषमिधा समीधिरे। स वावृधान ओषधीभिरुक्षित उरु ज्रयांसि पार्थिवा वितिष्ठसे' 'घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते। इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम्' इति वैश्यस्य त्रयो मन्त्राः।

६. सद्यो वत्सभावमतिक्रान्ता निवृत्तस्तन्यपाना वत्सतर्यः।

अग्निं परित्यज्य यजमानोऽन्यत्र न गच्छेत्। ब्राह्मौदनिकस्याग्नेरनुगमनं न कुर्यात्। यदि अग्निरयं प्रयायात् नाश्नमियाद्वा तदा ब्रह्मौदनं पक्त्वा पूर्वोक्तेन प्रकारेण तत्र समिध आदध्यात्। तत्र तत्र कालेऽग्न्याधेयाशक्तौ प्रायश्चित्तमेतत् कृत्वा यदा शक्नुयात्तदादधीत। प्रायश्चित्ते कृते सति द्वादशाहमेकाहं वा व्रतानि चरित्वादधीत। योऽप्येकाहव्रतकल्पेन श्व आधाता सोऽपि पुनर्ब्रह्मौदनपाकं कुर्यात्। यो य आधास्यति स स व्रतं चरतीत्यर्थवर्णनेन सर्वेषामृत्विजां व्रतचरणं सिद्धं भवति। भारद्वाजोऽपि[1] अध्वर्योः सर्वेषामृत्विजां वा व्रतचरणं मतान्तरत्वेन कीर्त्तयति।

### व्रतोपायनम्

ततोऽध्वर्युर्गार्हपत्यायतनस्योत्तरतः 'प्रजा अग्ने' इति मन्त्रेण कल्माषमजं बध्नीयात्। तदनु यजमानो व्रतोपायनं कुर्यात्। तदर्थम् 'अनृतात् सत्यमुपैमि, मानुषाद्दैव्यमुपैमि, दैवीं वाचं यच्छामि' इति यजमानो वाग्यमनं कुर्यात्। वीणावेणुवादनादिभि रात्रिजागरणं कर्त्तव्यम्। रात्रिजागरणं वाग्यमनं च न कुर्यादित्येके अभिप्रयन्ति। इन्धनशकलैरेतमग्निं सर्वां रात्रिं प्रज्वाल्य रक्षेत्।

### अरणिसंस्कारः

तदनन्तरं प्रातरुषःकाल एव 'जातवेदो भुवनस्य रेतः' 'अयं ते योनिर्ऋत्वियः'[2] इत्येताभ्यामृग्भ्यां तस्मिन्नग्नौ पूर्वसम्भृते अरणी प्रतितप्य 'अग्ने रक्षांसि सेधति' इति ते अभिमन्त्र्य 'मही विश्वपत्नी' इत्यरणी आह्रियमाणे यजमानः प्रतीक्षेत। ततोऽध्वर्युः 'दीक्षा च ते' इति मन्त्रेण ते यजमानाय प्रयच्छेत्। यजमानोऽपि हस्तद्वयेन ते प्रतिगृह्य अभिमन्त्र्य यावन्मन्थनं स्वहस्त एव धारयन्नासीत। ततोऽध्वर्युयजमानौ जपं कुर्याताम्।

### आयतनोद्धननं पार्थिववानस्पत्यसम्भारावपनञ्च

तदनु अध्वर्युः 'अपेत वीत' इति मन्त्रेण गार्हपत्यायतनमुद्धत्य 'शन्नो देवीरभिष्टये' इत्यद्भिस्तदवोक्षेत्। अनेनैव प्रकारेणाध्वर्युः दक्षिणाग्नेराहवनी-

---

१. भा० श्रौ० ५।३।२३

२. तै० सं० १।५।५।२

यस्य सभ्यावसथ्ययोश्च उद्धननमवोक्षणं च कुर्यात्। ततः पूर्वस्थापिताः सिकता गृहीत्वा ताः समग्रो द्वेधा विभज्य, एकमर्धं पुनर्द्वेधा विभज्य, एकं भागं गार्हपत्यायतने, एकं च दक्षिणाग्न्यायतने प्रक्षिपेत्। अवशिष्टमर्धं त्रेधा विभज्य आहवनीयसभ्यावसथ्यायतनेषु[1] प्रक्षिपेत्। एतेनैव विभागप्रकारेण इतरान् पार्थिवान् सम्भारान् विभज्य पूर्वोक्तेषु आयतनेषु स्थापयेत्। 'अग्नेर्भस्मासि' इति मन्त्रेण सिकताः स्थापयेत्। 'संज्ञानमसि' इत्यूषरमृत्तिकाः स्थापयेत्। एतानूषान् स्थापयन् मनसा तेषां ध्यानं कर्त्तव्यम्। ततः पृथक् पृथङ् मन्त्रोच्चारणपुरःसरं मूषिकबिलमृत्तिकावल्मीकवपावराहविहतानि च तत्तदग्न्यायतनेषु निदध्यात्। तत्र शर्कराणां स्थापनावसरे मनसा यजमानशत्रुं ध्यायेत्। एवं सप्त पार्थिवान् सम्भारान् तेषु तेष्वायतनेषु न्युप्य, तदुपरि तेनैव प्रकारेण सप्त वानस्पत्यानपि सम्भारान् न्युप्य तदुपरि हिरण्यं निवपेत्।

### अग्निमन्थनम्

तदनन्तरं ब्राह्मौदनिकस्याग्नेर्भस्मापनीय तस्मिन्नेवायतने शमीगर्भाद् अश्वत्थवृक्षात् पूर्वसम्पादिताभ्यामरणिभ्यामग्निमन्थनं कुर्यात्। ततः सूर्योदयात् पूर्वमग्निमादधानो दशहोतृमन्त्रेण[2] अरणी समवधाय 'सहाग्नेऽग्निना'[3] इति मन्त्रेण तत्समीपस्थेऽश्वे अग्निं मन्थेत्। अयमश्वः श्वेतवर्णः अलेपनाच्चो भवेत्, लोहितः श्वेतजानुरपि वा कश्चित् साण्डो भवेत्। अग्नौ मथ्यमाने सति ब्रह्मा शक्तेः साङ्कृतेः साम गायेत्। ततोऽग्नावुत्पन्ने सति यजमानोऽध्वर्यवे वरं[4] दद्यात्।

---

१. केचित् सभ्यावसथ्यौ नादधते। तेषां पक्षे अपरार्धस्य आहवनीय एव निवपनं कार्यम्।

२. 'चित्तिः स्रुक्। चित्तमाज्यम्। वाग्वेदिः। आधीतं बर्हिः। केतो अग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मन उपवक्ता। प्राणो हविः। सामाध्वर्युः' (तै० आ० ३।१।१) इति दशहोतृमन्त्रः।

३. 'सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिः सह ब्रह्मवर्चसेन' इति समग्रो मन्त्रः।

४. यत्र यत्र सामान्यतो वरो देयत्वेन विहितस्तत्र सर्वत्र गौरेव अभिप्रेता। 'गौर्वै वरः' (आप० श्रौ० ५।११।४) इत्यादि सूत्रकारेण स्वयमुक्तम्। गवाभावे तन्मूल्यं निष्कपरिमाणं सुवर्णं वा देयम्।

### गार्हपत्याधानम्

ततोऽध्वर्युर्मथनजातमग्निमञ्जलिना परिगृह्य तं काष्ठकरीषप्रक्षेपादिभिः बलवन्तं कृत्वा तं प्राञ्चमुद्धृत्य सम्यगासीनः सर्वेषां मन्त्राणामन्ते रथन्तरयज्ञायज्ञीये च सामनी गीयमाने यथर्षि[1] आधानेन प्रथमया व्याहृत्या[2] द्वाभ्यां वा व्याहृतीभ्यां, सर्पराज्ञीभ्यां[3], प्रथमेन च घर्मशिरसा[4] आदध्यात्। इदमेव गार्हपत्याधानं सूत्रकाराभिमतं वेदितव्यम्। तदनन्तरं 'यास्ते शिवास्तनुवः' इत्यादिमन्त्रैः सम्भारेष्वग्निं निदध्यात्। ततः स्थाप्यमानमग्निं यजमानोऽभिमन्त्रयेत। तं यजमानञ्चाध्वर्युर्घर्मशिरांसि वाचयेत्।

### दक्षिणाग्न्याधानम्

ततः सूर्यस्यार्धोदयसमये आहवनीयार्थं प्रज्वालिताद् गार्हपत्याग्नेः कश्चिद् भागमादाय पात्रे कस्मिंश्चिन्निधाय साग्निं तत् पात्रं स्वहस्ते गृहीत्वा तत्रैव तिष्ठत्यध्वर्यौ ऊर्ध्वज्ञुराग्नीध्र आसीनो दक्षिणाग्निमादध्यात्। अत्रापि यज्ञायज्ञीये सामनि गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिः सर्पराज्ञीभिः द्वितीयेन च घर्मशिरसा दक्षिणाग्न्याधानं कर्त्तव्यम्। तदनन्तरं पूर्ववत् 'यास्ते शिवास्तनुवः' इत्यादिमन्त्रैस्तमग्निं सम्भाराणामुपरि निदध्यात्। अत्राहवनीयस्योपर्युद्धरणकाले ब्रह्मा वामदेव्यं साम गायेत्।

### आहवनीयाधानम्

सूर्येऽर्धोदिते आहवनीयाधानं कर्त्तव्यम्। सर्वोदिते ब्रह्मवर्चसकाम आहवनीयाधानं कुर्यात्। तदर्थं गार्हपत्ये प्रणयनार्थमिन्धनमादीप्य उपयमनार्थं

---

१. आप० श्रौ० ५।११।७  २. भूर्भुवः सुवरिति तिस्रो व्याहृत्यः।

३. 'भूमिर्भूम्ना द्यौर्वरिणा' (तै० सं १।५।३) इत्याद्याश्चतस्र ऋचः सर्पराज्ञियः। 'भूमिर्भूम्ना' 'आयं गौः पृश्निरक्रमीत्' 'त्रिंशद्धाम विराजति' 'अस्य प्राणादपानती' (तै० सं० १।५।३।१) इति चतस्र ऋचः सर्पराज्ञ्य इत्युच्यन्ते। सर्पराज्ञेन दृष्टत्वात्तन्नाम। सर्पाणां राज्ञी भूमिः, तस्या ऋच इति सायणाचार्यकृतोऽर्थः। See also बृ० दे० ८।८९

४. 'घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत्। छर्दिस्तोकाय तनयाय यच्छ॥ वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच॥ अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनुः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वा दधेऽग्निनाग्ने ब्रह्मणा' इति त्रीणि घर्मशिरांसि।

सिकताः पात्रेण गृहीत्वा आदीप्तं तमिध्मम् 'ओजसे बलाय' इत्येताभिश्चतसृभिर्ऋग्भिरुद्धरेत्। अग्निमुद्धरन् किञ्चिद् गृह्णीयात्। उद्यतमग्निं सिकताभिर्धारयेत्। तदनन्तरमश्वस्य दक्षिणे कर्णे वदन्नध्वर्युर्यजमानं 'या वाजिन्नग्ने' इत्यादिमन्त्रं वाचयेत्। अग्निं धारयत्येव कञ्चित् कालं तिष्ठेत्। ततः 'प्राचीमनुप्रदिशम्'[१] 'विक्रमस्व महाँ असि'[२] इत्येतैर्मन्त्रैरश्वप्रथमा अध्वर्य्वादय ऋत्विज आहवनीयदेशं प्रति प्राञ्चो गच्छेयुः। आहवनीयस्य दक्षिणभागे ब्रह्मा रथं रथचक्रं वा त्रिवारं परिवर्त्तयेत्। तदनन्तरं जानुप्रमाणे धारयमाणोऽध्वनस्तृतीयमग्निं हरेत्। एवं नाभिप्रमाणे तृतीयमास्यप्रमाणे च तृतीयं हरेत्। कर्णप्रमाणादधिकमग्नेर्हरणं न कर्त्तव्यम्। यदि जान्वादिपरिमाणादग्निमुद्गृह्य ततो नोच्चैर्गृह्णीयात् तदैनं मुखतुल्यं धारयित्वा आदध्यात्। इदमेव तत्र प्रायश्चित्तं बोध्यम्। अग्नेरादित्यस्य च व्यवधानं न कुर्यात्। आत्मनो दक्षिणतः प्रसारिताभ्यां हस्ताभ्यां धारयन् हरेत्। मध्येमार्गं यजमानोऽध्वर्यवे वरं दद्यात्।

ततोऽध्वर्युस्तत्रैव हिरण्यं निधाय 'नाकोऽसि ब्रध्नः प्रतिष्ठासंक्रमणे' इत्यतिक्रामेत्। अश्वाक्रामणप्रकारस्तु सूत्रकारेण स्वयं निर्दिष्टः। आहवनीयायतनस्य पूर्वस्यां दिशि प्रत्यङ्मुखमश्वं धारयेत्। अयमश्वस्तरुणो भवति। तदभावे तरुणः कश्चिदनड्वान् ग्राह्यः। तमेव प्राच्यां दिश्यवस्थितमश्वम् 'अभ्यस्थाद्विश्वा'[३] इति दक्षिणेन पदा आहवनीयसम्भारानुत्तरत आक्रमयेत् यथा तेषु आहितस्याग्नेरङ्गारास्तत्पदमभ्यववर्तेरन्। तत्र स्वयमेव पतिष्यन्नित्यर्थः। ततः प्रदक्षिणमावर्त्य 'यदक्रन्द'[४] इति तं पुनरेवाक्रमयेत्। इदमेवाश्वपदे

---

१. 'प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह। विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे' ( तै० सं० ४।६।५।१ ) इति समग्रो मन्त्रः।

२. 'विक्रमस्व महाँ असि वेदिषन्मानुषेभ्यः। त्रिषु लोकेषु जागृहि प्रजया च धनेन च॥ इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय। इह इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेदः' इति समग्री मन्त्रः।

३. तै० सं० ४।२।८।१

४. तै० सं० ४।६।७।१

आधानमापस्तम्बीयानां सम्मतम्। कमण्डलुपदे[1] आधानं कर्त्तव्यमिति बह्वृचाः समामनन्ति। वाजसनेयिमतेन[2] तु अजपद एवाधानं करणीयमिति।

तदनन्तरं शिवाजप आपस्तम्बाचार्यस्य अभिमतो दृश्यते। तत्र यजमानः 'ये ते अग्ने'[3] इत्यादिमन्त्रैः शिवाजपं कुर्यात्। ततः पारक्षुद्रेण[4] यजुषा यजमानः शत्रुं प्रहिणुयात् तस्य च पराभवं कुर्यात्। अरण्येऽनुवाक्या[5] अत्र प्रयोक्तव्या भवन्ति। ततोऽभिमन्त्र्य आहवनीयायतनस्य पुरस्तात् प्रत्यङ्मुखोऽवस्थाय आहवनीयमध्वर्युरादध्यात्। ब्रह्मणि बृहति सामनि गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्थाधानेन सर्वाभिर्व्याहृतीभिः सर्वाभिः सर्पराज्ञीभिरसृतोयेन च वर्मशिरसा 'यास्ते शिवास्तनुवः' इत्यादिभिर्मन्त्रैश्च पूर्वनिहितानां सम्भाराणामुपरि तं निदध्यात्। ततः 'आनशे व्यानशे'[6] इति मन्त्रेणाधीयमानमग्निं यजमानोऽभिमन्त्रयेत।

## आज्यौषधिहोमः

अकृतशमनोऽग्निर्न स्प्रष्टव्य इति सूत्रकार उपदिशति। अत आज्येन ओषधिभिश्चासौ शमयितव्यः। तत्र 'या ते अग्ने' इत्यादिभिः प्रतिमन्त्रमाज्यमोषधीश्च जुहुयात्। अयमेवाज्यौषधिहोमः शमनहोमो वेत्युच्यते। शमनहोमाख्यमाहुतित्रयमिदं सर्वेष्वप्यग्निषु कर्त्तव्यं नाहवनोयमात्र इति सूत्रकाराभिप्रायः। प्रतिमन्त्रं समिदाधानं कर्त्तव्यमिति केचन अभिप्रयन्ति। अग्न्याधेये सर्वत्र ब्रह्मा सामानि

---

१. कमण्डलुः करकः पात्रविशेषः, तस्य योऽधोभागः स्थापनस्थानं तदत्र पदशब्देनाभिधीयत इति तत्रैवाधानम्। रुद्रदत्तस्तु कमण्डलुशब्दो मृगविशेषवाची इत्यभ्युपगम्य भाष्यकारमतं खण्डयति।

२. 'तमश्वस्य पद आधत्त' (श० ब्रा० २।४।२४) इति शतपथब्राह्मणे अश्वपद एवाधानविधानात् किमिदं वाजसनेयिमतमिति न ज्ञायते।

३. आप० श्रौ० ५।१५।२

४. 'यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ' इति यजुर्मन्त्रः पारक्षुद्रशब्देनोच्यते। पारक्षुद्र इति तैत्तिरीयब्राह्मणस्य प्राचां संज्ञा।

५. अरण्येऽनूच्यन्त इत्यरण्येऽनुवाक्याः। 'यास्ते अग्ने घोराः' 'क्षिक् च सीह्लितिश्च' (तै० आ० ४।२३।२४) इत्यनुवाकद्वयम्।

६. आप० श्रौ० ५।१६।१

गायेत्। एकेषां मतेन सामानि न गातव्यानि। वाजसनेयिनस्तु अध्वर्युणा गानविशिष्टा व्याहृतयः प्रयोक्तव्या इत्यामनन्ति।

## सभ्यावसथ्याधानम्

ततो लौकिकाग्निना अरणिमथिताग्निना वा, आहवनीयाद्वा यथर्थ्याधानेन सभ्याग्निमावसथ्याग्निं च आदध्यात्[1]। कात्यायनस्तु[2] अरणिमथिताग्निनैव सभ्यावसथ्यौ आदध्यादिति वदति। तदनन्तरम् 'अग्न आयूंषि पवसे' 'अग्ने पवस्व स्वपाः' 'अग्निर्ऋषिः पवमानः'[3] इति तिसृभिर्ऋग्भिस्तिस्रस्तिस्र आश्वत्थ्यः समिध एकैकस्मिन्नग्नावादध्यात्। 'समुद्रादूर्मिर्मधुमान्'[4] इत्यादिभिस्तिसृभिर्घृतान्वक्ताः शमीवृक्षीयास्तिस्रस्तिस्रः समिध एकैकस्मिन्नग्नावादध्यात्। उभयत्रापि केवलमाहवनीय एव सर्वाः समिध आदध्यादिति विकल्पोऽपि सूत्रकारेणाभिहितः। अनेनैव प्रकारेण उदुम्बरविकङ्कतशमीमय्यो नानावृक्षीयाः समिध एकैकस्मिन्नग्नावादध्यात्। ततस्तूष्णीमग्निहोत्रं जुहुयात्। अथवा द्वादशवारं गृहीतेनाज्येन स्रुचं पूरयित्वा प्रजापतिं[5] मनसा ध्यायन् जुहुयात्। सेयं प्रजापतिदेवताका आज्याहुतिरग्निहोत्रस्य स्थानं प्रतिपद्यते। ततो द्वादशवारं गृहीतेनाज्येन स्रुचं पूरयित्वा सप्तवत्यर्चा[6] पूर्णाहुतिं जुहुयात्। पूर्णाहुतौ हुतायां यजमानोऽध्वर्यवे वरं दत्वा शिवाजपं कुर्यात्। अत्र 'ये अग्नयः' इत्यादिमन्त्रेण एकामाहुतिं जुहुयात्। ततो विराट्[7]क्रमैर्यजमानः सर्वान् आहितानग्नीनुपतिष्ठेत।

---

१. अत्र सभ्यावसथ्ययोर्नित्यमाधानं सूत्रकारमतात् प्रतीयते। अन्ये सूत्रकारा हिरण्यकेशिभारद्वाजप्रभृतयस्तु अनयोर्वैकल्पिकमाधानमिच्छन्ति। श्रुतिवचनेनापि तयोर्विकल्पोऽवसीयते।

२. का० श्रौ० ४।९।१८

३. 'अग्न आयूंषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्। दधद्रयिं मयि पोषम्॥' (तै० सं० १।६।६।३) इति समग्रो मन्त्रः। 'अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्' इति सम्पूर्णो मन्त्रः।

४. आप० श्रौ० ५।१७।३

५. 'प्रजापतिं मनसा ध्यायेत्तूष्णींहोमेषु सर्वत्र' (आ० श्रौ० २।३।१९) इत्याश्वलायनः।

६. 'सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्तधाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरा पृणस्वा घृतेन' (तै० सं० १।५।३।२) इति सप्तवती ऋक्।

७. आप० श्रौ० ५।१८।२

### आग्नेयीष्टिः

आधानानन्तरमाग्नेयीष्टिः कर्त्तव्येति सूत्रकारोऽभिप्रैति। अस्यामिष्टौ अग्निर्देवता, अष्टाकपालः पुरोडाशो द्रव्यम्। इष्टिरियं पौर्णमासगताग्नेयीष्टिवत् कार्या। अत्र हविषो निर्वापकाले निरुप्तं हविरुपसन्नमप्रोक्षितं च कर्त्तव्यम्। यजमानो द्वाभ्यां क्लृप्तिसा[1]मनसीभ्यामग्नीनुपतिष्ठेत। आग्नेयस्य दक्षिणाकालेऽग्न्याधेयस्य दक्षिणां दद्यात्। अजं पूर्णपात्रं[2] नानावर्णैः सूत्रैर्निर्मितं शिरस उपधानमाग्नीध्राय दक्षिणात्वेन देयम्। वहनयोग्यमश्वं ब्रह्मणेऽध्वर्यवे वा दक्षिणात्वेन प्रयच्छेत्। आहवनीयदेशे स्थितायाध्वर्यवे अनड्वाहं दद्यात्। गार्हपत्यस्य पश्चाद्भागेऽवस्थिताय होत्रे सवत्सां धेनुं दद्यात्। एतानि द्रव्याणि सर्वेषामृत्विजां साधारणानि भवन्ति। वासःप्रभृतीनि निर्दिष्टानि दत्वा ततो द्वादशसंख्यापूर्तिपर्यन्तं गावो दक्षिणात्वेन देयाः। द्वादशपर्यन्ता संख्या नियता। आदिष्टदक्षिणाभ्य ऊर्ध्वं याथाकाम्येनानियमे प्राप्ते षट् द्वादश चतुर्विंशतिर्वा देयाः। एताः संख्याः परस्परेण विकल्पन्ते[3]। यदि कश्चन दरिद्रोऽग्न्याधेयं कुर्यात्तदा स एकामेव गां दक्षिणात्वेन दद्यात्। सा च गवामेव स्थानं प्रतिपद्यते।

### पवमानहवींषि

तदनन्तरं पवमानहवींषि[4] सूत्रकारेण कर्त्तव्यतया विहितानि। यस्मिन्नहनि आधानं क्रियते तस्मिन्नेवाहनि पवमानहवींषि निर्वपेत्। अथ वा आधानदिनात्

---

१. 'कल्पेतां द्यावापृथिवी' ( तै० सं० ४।४।११।१ ) इति क्लृप्तिः। 'येऽग्नयः समनसः' ( तै० सं० ४।४।११।१ ) इति सामनसी।

२. 'अष्टमुष्टि भवेत् किञ्चित् किञ्चिच्चत्वारि पुष्कलम्।
पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते॥' इति पूर्णपात्रलक्षणम्।
तस्मादष्टाविंशत्युत्तरशतमुष्टिपरिमितं व्रीह्यादिद्रव्यं पूर्णपात्रमिति व्यवहारः।

३. पूर्वमीमांसायां द्वादशाध्यायस्य चतुर्थपादे षष्ठाधिकरणे 'संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात्' इति सूत्रेणाग्न्याधाने सूत्रकाराभिमतो दक्षिणासंख्याविकल्प एव सिद्धान्ततया निर्णीतः।

४. 'त्रीणि हवींषि निर्वपति—अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' ( तै० ब्रा० १।१।५।१० ) इति विहितानि त्रीणि पवमानहवींषि। पवमानहविषामाधानाङ्गत्वं केचन मीमांसका अभिप्रयन्ति। केचित्तु आधानवत् पवमानेष्टीनां स्वत एवाहवनीयादिसम्पादकत्वात्तेषां नाधानाङ्गत्वमिति वदन्ति। विषयोऽयं पूर्वमीमांसायां तृतीयाध्यायस्य प्रथमपादे द्वादशाधिकरणे विचारितः।

द्वादशाहे त्र्यहे चतुरहे अर्धमासे मासि ऋतौ संवत्सरे वा इमानि कर्तुं शक्यन्ते। यस्तु आधानानन्तरं सोमयागं कर्तुमिच्छेत् स संवत्सरात् पूर्वमेतानि हवींषि न निर्वपेत्। तत्र सोमपूर्वाधाने संवत्सरमध्ये पवमानहवींषि निर्वपेदिति मतान्तरमपि[1] सूत्रकारेणोपन्यस्तम्। अत्र त्रीणि हवींषि[2] भवन्ति। अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये इति तिसृभ्यो देवताभ्यस्तिस्र आज्याहुतीर्जुहुयात्। यदा पुनः पक्षान्तरमवलम्ब्य सोमदेवताभ्यो हूयते तदानीमपि तिस्र एवाज्याहुतीः जुहुयादिति सूत्रकार उपदिशति। इमानि समानतन्त्रेण भिन्नतन्त्रेण वाऽनुष्ठातुं शक्यन्ते। यदा समानतन्त्रेणानुष्ठानं तदा पौर्णमासाग्नेयेन सहैवानुष्ठीयन्ते। कात्यायनमतेऽत्र[3] प्रथमाया इष्टेरग्निः पवमानो देवता, द्वितीयस्या अग्निः पावकः अग्निः शुचिः, तृतीयस्या अदितिरिति। तत्रादितिदेवतायै चरुः कर्तव्य इत्यपि विशेषः सूत्रकारेण प्रदर्शितः।

आश्वलायनस्तु 'पूर्णाहुत्यन्तमग्न्याधेयम्'[4] इति सूत्रयन् अग्न्याधानस्य पूर्णाहुत्या समाप्तिं स्वमते अभिप्रैति। तत्र इष्ट्यन्तत्वपक्षे तिस्रः पवमानेष्टयस्तु तन्मते वैकल्पिक्यो भवन्ति। यदि अध्वर्यवस्ता इष्टीः कुर्युस्तत्र प्रथमायामिष्टौ द्वे देवते भवतः। अग्निः प्रथमः, अग्निः पवमानो द्वितीयः। प्रथमेयमिष्टिः[5] पौर्णमासाग्नेयेन सह समानतन्त्रेणानुष्ठीयते। अतोऽत्र वार्त्रघ्नावाज्यभागौ कर्तव्यौ। प्रधानयागे आग्नेयस्य 'अग्निर्मूर्धा'[6] इत्यनुवाक्या नित्या भवति। 'अयमग्निः सहस्रिणः'[7] इति तु याज्यायां विशेषः। 'अग्न आयूंषि पवसे' 'अग्ने

१. 'निर्वपेदित्येके' (आप० श्रौ० ५।२१।४) इति सूत्रकरणादापस्तम्बमते विकल्पः सिध्यति। हिरण्यकेशी तु 'सोमेन यक्ष्यमाणस्यादधानस्य पवमानहविषां सांवत्सरिकः कल्पः (स० श्रौ० ३।५) इति सूत्रयन् सोमपूर्वाधाने संवत्सरान्ते पवमानहवींषि कर्त्तव्यानीति नित्यवदेषामनुष्ठानं स्वमतेऽभिप्रैति।

२. कात्यायनभारद्वाजाभ्यां पवमानहवींषि तनुहवींषि इत्युच्यन्ते। अत्र यद्यपि प्रथमाया एवेष्टेरग्निः पवमानो देवता नेतरयोस्तथापि तिसृणामेव पवमानेष्टित्वेन व्यवहारो याज्ञिकसम्प्रदाये प्रसिद्धः।

३. का० श्रौ० ४।१०।८-१०

४. आ० श्रौ० २।१।१७

५. आपस्तम्बमते तु यदा समानतन्त्रेणानुष्ठानं तदा तिसृणामेवेष्टीनां पौर्णमासाग्नेयेन सहैवानुष्ठानम्।

६. ऋ० सं० ८।४४।१६

७. ऋ० सं० ८।७५।४

पवस्व स्वपाः'[1] इत्यग्नेः पवमानस्य याज्यानुवाक्ये। 'स हव्यवाडमर्त्यः'[2] इति स्विष्टकृतः अनुवाक्या। 'ये३ यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाडग्नेः प्रियाधामान्ययाडग्नेः पवमानस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामान्ययाड् जुषतां हविरग्निर्होता पुरोहितः'[3] इति याज्या। संयाज्ये इत्युक्तेः स्विष्टकृद्यागसम्बन्धिन्यौ याज्यानुवाक्ये प्रतीयादिति सूत्रकारो बोधयति। अत्रावाहनपञ्चमप्रयाजसूक्तवाकपठने[4] आश्वलायनोक्ताः केचन विशेषा एव द्रष्टव्याः। अन्यत् सर्वं पौर्णमासवत् कर्त्तव्यम्।

अत्रैव प्रसङ्गात् सूत्रकारेण कतिपये साधारणधर्मा आम्नाताः। विकृतौ एकस्या द्वयोर्बह्वीनां वा देवतानामागमेऽपि प्राकृतीनां सर्वासामुद्वारो द्रष्टव्यः। तत्र सर्वासां प्राकृतीनामुत कासाञ्चिदुद्वार इति संशये आज्यभागौ स्विष्टकृतं चान्तरा या देवता यष्टव्यास्ता एवोद्धर्तव्या इति सूत्रकाराभिप्रायो गम्यते। यस्य प्राकृतस्य स्थाने वैकृतं तज्जातीयमागतं भवति तद्वैकृतं प्राकृतधर्मकं वक्तव्यम्। तदा प्राकृतं त्वपनेतव्यम्। यथा चातुर्मास्यान्तर्गते वरुणप्रवासपर्वणि पित्र्येष्टौ 'उशन्तस्त्वा निधीमहीत्येतां त्रिरन्वानं ताः सामिधेन्यः'[5] इत्युक्तेः प्राकृतीनां सामिधेनीनामपायः सिद्धः।

द्वितीयस्यामिष्टौ अग्निः पावकः, अग्निः शुचिरिति द्वे देवते भवतः। वृधन्वन्तावाज्यभागावत्र कर्तव्यौ। 'स नः पावक दीदिवः'[6] 'अग्ने पावक रोचिषा'[7]

---

१. ऋ० सं० ८।६६।१९; ८।६६।२१

२. ऋ० सं० ३।११।२

३. ऋ० सं० ३।११।२

४. 'अग्निमावह, अग्निं पवमानमावह, देवाँ आज्यपा आवह, अग्निं होत्रायाऽऽवह, स्वं महिमानमावह, आवह जातवेदः सुयजा यज' इति विलक्षण आवाहनमन्त्रः। 'ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं पवमानं स्वाहा देवा आज्यपा जुषाणा अग्न आजस्य व्यन्तु३' इति पञ्चमप्रयाजे विशेषः। एवं सूक्तवाके 'अग्निरिदं हविः सोम इदं हवि अग्निरिदं हवि अग्निः पवमान इदं हविः' इत्यादि विशेषः।

५. आ० श्रौ० २।१८।६

६. ऋ० सं० १।१२।१०

७. ऋ० सं० ५।२६।१

इत्यग्नेः पावकस्य याज्यानुवाक्ये। 'अग्निः शुचिव्रततमः'[1] 'उदग्ने शुचयस्तव'[2] इत्यग्नेः शुचेः याज्यानुवाक्ये। 'साह्वान् विश्वा अभियुजः'[3] 'अग्निमीडे पुरोहितम्'[4] इति संयाज्ये। अन्यत् सर्वं दर्शयागवदनुष्ठेयम्।

तृतीयस्यामिष्टौ सप्तदशसंख्यकाः सामिधेन्यः पठनीया इति कञ्चन विशेषं सूत्रकार उपदिशति। तत्र चोदकप्राप्ता याः पञ्चदश सामिधेन्यस्तासामुपरि अधिकमृग्द्वयं प्रक्षेप्तव्यम्। तदर्थं 'समिध्यमानो अध्वरे'[5] इति उपोत्तमायाः प्राक् 'पृथुपाजा अमर्त्यः' 'तं सबाधो यतस्रुचः'[6] इति द्वे ऋचौ प्रक्षिपेत्। सामिधेनीषु अतिरिक्ततया विहिते इमे ऋचौ धाय्ये इत्युच्येते। 'अग्निना रयिमश्नवत्'[7] 'गयस्फानो अमीवहा'[8] इति पुष्टि[9]मन्तावाज्यभागौ कुर्यात्। एते आज्यभागयोरनुवाक्ये। याज्ये तु नित्ये भवतः। प्रकृतायामिष्टौ अग्नी-षोमाविन्द्राग्नी विष्णुरिति तिस्रो देवताः परस्परं विकल्पन्ते। अदितिश्चान्या नित्या भवति। तत्र 'उत त्वामदिते महि'[10] इत्यदितेः पुरोऽनुवाक्या। 'महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम्'[11] इति याज्या। 'प्रेद्धो अग्ने' 'इमो अग्ने'[12] इति स्विष्टकृतो याज्यानुवाक्ये। विराजावित्युक्ते एते संयाज्ये प्रत्येतव्ये इति सूत्रकारोऽभिप्रैति। अन्यत् सर्वं पौर्णमासवत् कर्तव्यम्। अनेनैव प्रकारेण तिस्र इष्टयः कर्तव्या भवन्ति।

---

१. ऋ० सं० ८।४४।२१
२. ऋ० सं० ८।४४।१७
३. ऋ० सं० ३।११।६
४. ऋ० सं० १।१।१
५. ऋ० सं० ३।२७।४
६. ऋ० सं० ३।२७।५-६
७. ऋ० सं० १।१।३
८. ऋ० सं० १।९१।१२
९. 'अग्निना रयिमश्नवत् पोषमेव दिवेदिवे' 'गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः' इति पुष्टिपदघटितौ मन्त्रौ पुष्टिमन्तौ। तद्वन्तावाज्यभागावपि पुष्टिमन्ताविति।
१०. ऋ० सं० ८।६७।१०
११. शाखान्तरीयत्वेन सूत्रकारो मन्त्रमिमं समग्रं पठति।
१२. ० सं० ७।१।३; ७।१।१८

यदा आद्योत्तमे द्वे इष्टी स्यातामाद्या वेति पक्षस्तदापि तिसृणामिष्टीनां यावत्यो देवतास्ताः सर्वा यष्टव्याः। तत्राद्योत्तमपक्षे गृहीते सति मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये। यदा पुनराद्यैव पक्षस्तदा सर्वा देवता आद्यायामेव प्रक्षिप्य यष्टव्याः। एवं सति द्वितीयतृतीययोरपि या देवतास्ताः सर्वा एव प्रथमपक्षे प्राप्नुयुः। अतस्तस्यामेव प्रथमायामिष्टौ धाय्ये विराजौ भवतः। पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति असाविष्टिर्वैराजतन्त्रं विजानीयात्। आश्वलायनोक्ता इमे विशेषा आपस्तम्बेन न प्रतिपादिताः।

## अनुनिर्वाप्यानि

पवमानहवींषि निरूप्य तस्मिन्नेवाहनि तस्मिन्नेवाग्नौ अनुनिर्वाप्यानि सूत्रकारेण कर्त्तव्यतया विहितानि। पवमानहविषां निर्वापमनु पश्चादनुष्ठेयतया हेतोरेवंविधं नाम सञ्जातम्। तत्र ऐन्द्राग्नमेकादशकपालं पुरोडाशमादित्यं च घृतश्रपितं चरुं कुर्यात्। अत्र ऐन्द्राग्नस्य यागस्य मुख्यत्वादामावास्यमेव[1] तन्त्रं बोध्यम्। अस्यामिष्टौ सप्तदश सामिधेन्यो भवन्ति। पुरोडाशस्य चतुर्धाकरणसमये[2] आदित्यं चरुमविभक्तं ब्रह्मणे प्रयच्छेत्। तं विभज्य चत्वार ऋत्विजो भक्षयेयुः। प्राशितवद्भ्यस्तेभ्यः समानमेव वरं दद्यात्। अत्र धेन्वनडुहोर्दानमेके समामनन्ति। एतावता इष्टिरियं परिसमाप्यते।

तदनन्तरं त्रुग्विरिति नामिका काचनेष्टिरापस्तम्बेन कीर्त्तिता। त्रीणि पर्वाणि यस्याः स्थाल्याः सा त्रुग्विरिति रुद्रदत्तोऽभिप्रैति। सत्याषाढस्त्वेतामिष्टिं पूर्वेष्ट्या सहैकतन्त्रामुक्तवान्। अत्राग्नावैष्णव एकादशकपालः, अग्नीषोमीय एकादशकपालः, विष्णवे शिपिविष्टाय घृतश्रपितश्चरुरिति त्रीणि हवींषि निर्वपेत्।

१. 'द्विदेवता अग्नीषोमीयविकाराः' 'बहुदेवताश्च' 'ऐन्द्राग्नविकारा वा' (आप० प० सू० ३।४१-४३) इति परिभाषासूत्रैः प्रकृतैन्द्राग्नयागस्याग्नीषोमविकृतित्वमैन्द्राग्नविकृतित्वं वेति विकल्पो गम्यते, किन्तु— असन्नयतो यजमानस्य दर्शे ऐन्द्राग्नपुरोडाशस्य विहितत्वाद्देवताघटितस्य द्रव्यघटितस्य च सादृश्यस्य सत्त्वादामावास्यमेव तन्त्रमत्र भवति।

२. 'आग्नेयं चतुर्धा करोति' इति विशेषवाक्यम्। 'पुरोडाशं चतुर्धा करोति' इति सामान्यवाक्यम्। सामान्यवाक्येन सर्वत्र पुरोडाशे चतुर्धाकरणे प्राप्ते विशेषवाक्येन संकोचः क्रियते—'आग्नेयं चतुर्धा करोति' इति। तेनादित्यचरौ चतुर्धाकरणस्य न प्राप्तिरिति सर्वं द्रव्यं ब्रह्मणे दद्यात्।

अस्यामिष्टौ दर्शपूर्णमासवदन्वाहार्य एव दक्षिणा भवति। आपस्तम्बमते तु भिन्नतन्त्रेणास्या अनुष्ठानं कर्त्तव्यमित्यापतति।

वाजसनेयिनस्तु सर्वेषामनुनिर्वाप्यानां स्थानेऽदितिदेवताकं घृतश्रपितचरुद्रव्यकं सप्तदशसामिधेनीकं सधेनुदक्षिणं कञ्चन यागविशेषं विदधति।

अग्निहोत्रारम्भः

यस्मिन् दिने पवमानहवींषि समनुष्ठीयन्ते तस्मिन्नेव दिने सायमग्निहोत्रमारभेत इति सूत्रकारो बोधयति। अतो यस्मिन्नहनि सेष्टिकमग्न्याधेयं परिसमाप्यते तस्मिन्नहन्यग्निहोत्रं कुर्वन् यजमानस्तस्मिन्नेवाश्वपदिकेऽग्नौ अध्वर्युणा दशहोतृमन्त्रेण[1] हुते सति सायमग्निहोत्रं जुहुयात्। तस्मिन् सायमग्निहोत्रे व्याहृतीभिर्हविरुपसादयेदिति सूत्रकारोक्तो विशेषो द्रष्टव्यः। अनेन प्रत्याम्नानेन[2] नित्यस्तूपसादनमन्त्रो निवर्त्तते। तत आरभ्य संवत्सरेऽतीते सायंहोमे एताभिरेवोपसादनं कर्त्तव्यम्।

द्वादशाहव्रतम्

ततः सूत्रकारेणाहिताग्नेर्द्वादशाहसाध्यं व्रतमभिहितम्। पवमानहवींषि निरुप्यानुनिर्वाप्याण्यैन्द्राग्नादीनि च परिसमाप्य तानग्नीन् अनिर्वाप्य तथैव द्वादशदिनपर्यन्तं धारयेत्। इदमेव अजस्रधारणव्रतमित्युच्यते। तत्र द्वादशदिनपर्यन्तमजस्रं धार्यमाणेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयात्। आश्वलायनमते पौर्णमास्याममावास्यायाञ्चोभयत्राजस्रधारणं कर्त्तव्यम्। 'आधानाद्द्वादशरात्रमजस्राः'[3] इत्यविशेषेणाजस्रधारणविधानात् सर्वदा द्वादशदिनपर्यन्तं यजमान एवाग्निहोत्रं जुहुयादिति सूत्रकाराभिप्रायो गम्यते।

तदेवाग्निहोत्रं हुत्वा ग्रामान्तरे वसतिं न कुर्यात्। तद्धोमावसरे यजमानः पवित्रं वासः परिदध्यात्। अग्निहोत्रहोमार्थं या प्रथमा गौर्दुह्यते तामत्र दक्षिणात्वेन दद्यात्।

---

१. 'चित्तिः स्रुक्, चित्तमाज्यम्, वाग्वेदिः, आधीतं बर्हिः, केतो अग्निः, विज्ञातमग्निः, वाक्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युः' इति दशहोता। तै० आ० ३।१।१

२. प्रत्याम्नानं प्रकृतिप्राप्तस्यार्थस्य स्थानेऽर्थान्तरोपदेशः। तेन 'उपप्रेत' इत्यादिः प्राकृत उपसादनमन्त्रो निवर्त्तते। आप० प० सू० ४।२

३. आ० श्रौ० २।१।३५

### दर्शपूर्णमासारम्भः

तदनन्तरं सूत्रकार आधानसमाप्तौ दर्शपूर्णमासारम्भे मतान्तराणि प्रदर्शयति। आधानात् परं तूष्णीं हस्ताववनिज्य संवत्सरमग्निहोत्रं हुत्वा ततः पूर्णे संवत्सरे दर्शपूर्णमासावारभ्य ताभ्यामेव संवत्सरं यजेत। ततस्तृतीये संवत्सरे अग्निष्टोमेन निरूढपशुबन्धेन वेष्ट्वा तदूर्ध्वमन्यानि नित्यनैमित्तिककाम्यानि कर्माणि कुर्यादित्ययमेकः पक्षः। पुनरपि पक्षान्तरमभिदधाति—अग्नीनाधायाग्निहोत्रमारभ्य द्वादशाहव्रतविधिना पवित्रवासाः स्वयं यजमानस्त्रयोदशरात्रमग्निहोत्रं हुत्वा प्रवासमकृत्वा चतुर्दशेऽहनि तेष्वेवाजस्राग्निषु अग्निष्टोमेन निरूढपशुबन्धेन वेष्ट्वा तदन्ते ज्वलतस्तानुत्सृजेत्। यथा हि शाकटिकोऽनडुहः सुयवसान् कृत्वा तान् कृषिकर्मणि प्रेरयति तथैवात्र यजमानोऽप्यग्नीन् प्रथममेव सोमेन पशुना वा सुहृष्टान् कृत्वा हविर्वहनाय प्रेषयेदिति दृष्टान्तदार्ष्टान्तिकयोः ब्राह्मणोक्तः समन्वयः सूत्रकारेण बोधितः।

### अन्वारम्भणीयेष्टिः

एवं प्रासङ्गिकौ कर्मणामारम्भविकल्पावुक्त्वा प्रकृतमेवारम्भप्रकारं सूत्रकार उपदिशति। समाप्ते सेष्टिकेऽग्न्याधेये याऽनन्तरा पौर्णमासी तस्यामेव 'पूर्णा पश्चात्' 'यत्ते देवा अदधु'रिति मन्त्रद्वयेन सारस्वतौ होमौ हुत्वा अन्वार[1]म्भणीयामिष्टिं निर्वपेत्। अस्यामिष्टौ तिस्रो देवता भवन्ति—अग्नाविष्णू, सरस्वती, सरस्वान् इति। तत्राग्नावैष्णव एकादशकपालः, सरस्वत्यै चरुः, सारस्वतो द्वादशकपाल इति त्रयो यागाः पूर्णमासतन्त्रेणानुष्ठीयन्ते। यश्चात्मानमन्नाद्यं कामयेत सोऽग्नये भगिनेऽष्टाकपालं पुरोडाशं निर्वपेत्। इमं यागं नित्यतया कुर्यादिति केषाञ्चन मतम्। अन्ये तु नित्यस्य काम्यस्य च नानातन्त्रत्वविकल्पमिच्छन्ति। अत्र भगिनोऽग्नेः याज्यानुवाक्ये सूत्रकारेण

---

१. 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं कुर्यात्' इतीयमिष्टिर्दर्शपूर्णमासयोरारम्भं निमित्तीकृत्य विहिता। प्रतिमासं क्रियमाणयोर्दर्शपूर्णमासयोर्न कर्मभेदः, किन्तु प्रयोगभेद एव। अतः सकृदियमिष्टिरनुष्ठेया, प्रयोगेषु भिन्नेष्वपि कर्मण एकत्वात्। आरम्भश्चात्र 'दर्शपूर्णमासाभ्यां यक्ष्ये' इति सङ्कल्प एव। स चारम्भः यावज्जीवप्रयोगस्य सकृदेव भवति। एवञ्च यत्र विकृतीष्टीनां कर्मभेदो निमित्तभेदश्च तत्रेयमिष्टिरनुष्ठेया सिध्यति। तदिदम् 'आरम्भविभागाच्च' (आप० प० सू० ४।२०) इति सूत्रेणोक्तम्।

प्रदर्शयति । ततः स्विष्टकृद्यागात् पूर्वं 'चित्तञ्च चित्तिश्च'[1] इत्यादिमन्त्रेण द्वादश जयहोमाः कर्त्तव्याः । 'चित्ताय स्वाहा, चित्त्यै स्वाहा' इति चतुर्थीविभक्त्या सर्वे होमाः कर्त्तव्या इति मतान्तरमपि सूत्रकारेण कीर्त्तितम् । जयहोमानन्तरं 'प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छत्' इति मन्त्रेण त्रयोदशीमाहुतिं जुहुयात् । यश्च जनसमूहे आत्मानं विस्मापयितुमिच्छति स 'अग्ने बलद सह ओजः'[2] इत्यादिमन्त्रेण चतुर्दशीमाहुतिं जुहुयात् । अस्यामिष्टौ मिथुनौ गावौ दक्षिणात्वेन दद्यात् । एतेन इष्टिरियं समापिता भवति ।

आश्वलायनोऽपि दर्शपूर्णमासारम्भतः पूर्वमन्वारम्भणीयेष्टिं कर्त्तव्यतया विदधाति । सायं प्रातरग्निहोत्रमनुष्ठाय पर्वणि दर्शपूर्णमासयोरारम्भतः पूर्वमन्वारम्भणीयेष्टिरनुष्ठीयते । अन्वारभ्यतेऽनयेत्यन्वारम्भणीया । सा च दर्शपूर्णमासारम्भविशेषः । तत्रापस्तम्बाचार्यो दर्शपूर्णमासारम्भकनिमित्ततया सारस्वतहोमयोरन्वारम्भणीयायाश्चानुष्ठानमुपदिशति । नायं सारस्वतहोम आश्वलायनाभिमतो दृश्यते । इयमिष्टिः पुरुषार्था बोध्या । इमे त्रयो यागाः पर्णमासतन्त्रेणानुष्ठीयन्ते । तत्र भगिगुणकस्याग्नेर्नित्यतया काम्यतया च यागानुष्ठानविकल्पमापस्तम्बः प्रतिपादयति । आश्वलायनस्तु नित्यवदेतस्य यागस्यानुष्ठानं स्वमतेऽभिप्रैति । अत्र प्रधानदेवतानां याज्यानुवाक्याः[3] सूत्रकारेण प्रदर्शिताः ।

---

१. 'चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरञ्च' ( तै० सं० ३।४।४ ) इति समग्रो जयहोममन्त्रः ।

२. आप० श्रौ० ५।२४।४

३. 'अग्नाविष्णू सजोषसे मा वर्धन्तु वाङ्गिरः । द्युम्नैर्वाजेभिरागतम् ॥' 'अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमेदमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्यत् ॥' इत्यग्नाविष्ण्वोः कल्पजे याज्यानुवाक्ये । 'पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः' (ऋ० सं० १।३।१०) इति सरस्वत्याः पुरोनुवाक्या । 'पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् । ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत्' ( ऋ० सं० ६।४९।७ ) इति सरस्वत्या याज्या । 'पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम्' ( ऋ० सं० ७।९६।६ ) इति सरस्वतः पुरोनुवाक्या । 'दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि' ( ऋ० सं० १।१६४।५२ ) इति सरस्वतो याज्या । 'आ सवं सवितुर्यथा भगस्येव भुजिं हुवे । अग्निं समुद्रवाससम्' ( ऋ० सं० ८।१०२।६ ) इत्यग्नेर्भगिनो याज्या । आपस्तम्बस्तु अत्र भिन्ने याज्यानुवाक्ये निर्दिशति ।

## आहिताग्निव्रतानि

तत आपस्तम्बाचार्येणाहिताग्नेर्यावज्जीविकाणि व्रतान्यभिधीयन्ते। आहिताग्निना अनृतभाषणं न कर्त्तव्यम्। अस्य गृहे ब्राह्मणो बुभुक्षितो न कदापि तिष्ठेत्। अस्तमिते सूर्ये निवासायागतमतिथिं वसतिदानेन उपकल्पयेत्। ऋबीसपक्वं[1] द्रव्यं न भुञ्जीत। उदकसिक्तं दारु अग्नौ नादध्यात्। अन्तर्नावि या आपस्ता नाश्नीयात्। स्वभावत ऊषरे देशे न निवसेत्। सदैव पुण्यानि कर्माण्याचरेत्। प्रमादात् स्त्र्युपगमने हिङ्कारमुक्त्वा वाचंयमो भवेत्। वाग्विसर्जनं वा कुर्यात्। सायमाहुतौ प्रातराहुतौ चाहुतायां न किमपि भक्षयेत्। इमानि आहिताग्निव्रतानि कात्या[2]यनभार[3]द्वाजाभ्यामुक्तानि। अत्र व्रतविषये आश्वलायनो न किमपि वदति।

## पुनराधेयम्

अग्नीनां विधानेन सम्भारेषु स्थापनमग्न्याधेयम्। तत्राहिता अग्नयः पुनर्विधानान्तरेण यस्मिन् कर्मणि आधीयन्ते तत् पुनराधेयं पुनराधानमिति वोच्यते। प्रजापश्वादिफललाभार्थं पुनः क्रियमाणमाधानं पुनराधानमिति तच्छब्दव्युत्पत्तिः। इदमग्न्याधेयस्यैव विकारो बोध्यः। अग्न्याधेयवदेवास्यानुष्ठानं करणीयं भवति। तत्र अनृद्धिकामः प्रजाकामः पशुकामः पुष्टिकामो वा यजमानः अग्न्याधानात् परं तस्मिन्नेव संवत्सरे पुनराधानं कुर्यात्। रोगादिभिः पीडिते, पुत्रमरणे, ज्ञातिनां राजादिभिः निग्रहे, अङ्गवैकल्ये वा पुनराधेयं कर्त्तव्यम्। यस्मिन् संवत्सरेऽग्न्याधानं कृतं तस्मिन्नेव संवत्सरे एतेषु निमित्तेषु कामेषु वा सञ्जातेषु पुनरादधीतेति सूत्रकाराभिप्रायो गम्यते। आश्वलायनोऽपि आपस्तम्बवदाधानानन्तरं तस्मिन्नेव संवत्सरे उदरव्याधौ पुत्रपश्वादिहानौ वा निमित्ते सति पुनराधानं कर्त्तव्यतया विदधाति।

अस्मिन् पुनराधाने उत्सर्गेष्ट्या अग्नीनुत्सृज्य तदनुष्ठानं कुर्यात्। इयमुत्सर्गेष्टिरग्न्युद्वासनेष्टिरिति नाम्नापि व्यवह्रियते। अस्यामिष्टौ अग्निः,

---

१. यत् तिरोहितस्याग्नेरूष्मणा पक्वं न प्रत्यक्षाग्निना तत् ऋबीसपक्वमिति रुद्रदत्तः।

२. का० श्रौ० ४।१०।१५

३. भा० श्रौ० ५।१६।११-२४

अग्निर्वैश्वानरः,[1] वरुणः, अग्निरप्सुमान्, मित्रश्चेति पञ्च देवता भवन्ति। तत्राग्नेयोऽष्टाकपालः, वैश्वानरो द्वादशकपालः, वारुणो दशकपालः, अग्नयेऽप्सुमतेऽष्टाकपालः, मैत्रो चरुश्चेति पञ्च यागाः कर्तव्याः। आश्वलायनमते तु अस्यामिष्टौ अग्निः, अग्निर्वैश्वानरः, वरुणः, अग्निरंशुमान्, मित्र इति पञ्च देवता भवन्ति। ततः स्विष्टकृद्यागात् पूर्वं सप्त आहुतयः कर्त्तव्या इत्यापस्तम्बाभिप्रायः। एतावता इष्टिरियं परिसमाप्यते।

आधानानन्तरं पर्वणि पौर्णमासेनेष्ट्वा तत्समनन्तरमुत्सर्गेष्टिं निरूप्य ज्वलतस्तानग्नीनुत्सृजेत्। मया अग्नयः परित्यक्ता इति सङ्कल्प्य तान् बुद्ध्योपेक्षेत न रक्षेदित्यर्थः। तत्र संवत्सर एवोत्सर्गस्य परावधिर्बोध्यः। अतः प्रागेव संवत्सरादाधातव्यम्। तेन संवत्सरातिक्रमेऽग्निहोत्राद्यतिक्रम-[2] प्रायश्चित्तानि भवन्ति।

## पुनराधेयनक्षत्राणि सम्भाराश्च

तत्र पुनराधानं कर्म विदधता सूत्रकारेण तत्कालोपयिकानि नक्षत्राणि कीर्त्यन्ते। रोहिण्यां पुनर्वस्वोरनुराधायां वा पुनराधानं कुर्यात्। कात्यायनस्तु[3] पुनर्वस्वोः पुनराधानं कर्त्तव्यमित्यभिप्रैति। वर्षासु शरदि वा पुनराधानं कर्त्तुं शक्यते। अस्मिन् पुनराधाने आग्न्याधेयिकाः सम्भारास्तथा आधानयजूंषि च पक्षे कृता पक्षे अकृताश्च भवन्ति। तत्र सम्भारप्रवृत्तौ पञ्च पार्थिवाः पञ्च वानस्पत्याश्च सम्भाराः सम्भरणीया इति केचन अभिप्रयन्ति। ततो गार्हपत्याधानपर्यन्तमरण्याहरणादि सर्वं समानमेव। सम्भरणकाले पुराणानपि दर्भान्

---

१. यत्र 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति विधिर्वर्त्तते तत्र सर्वत्रापि अग्निर्वैश्वानरः प्रत्येतव्यः, तदीयार्थवादे अग्निवैश्वानरस्यैव स्तवनात् तदीययाज्यानुवाक्यासु चाग्नेः श्रवणादिति। पूर्वमीमांसायां दशमाध्यायस्य चतुर्थदशमे विधिवाक्यगतस्यैव शब्दस्यान्यूनानतिरिक्तस्य देवतात्वमिति सिद्धान्तादत्र च 'वैश्वानरम्' इत्येव विधिशब्दात् तावन्मात्रस्यैव देवतात्वं नाग्निविशिष्टस्येति मीमांसकसिद्धान्तः। परन्तु आश्वलायनोऽग्निं वैश्वानरमेव देवतामुक्तवान्।

२. प्रायश्चित्तप्रकरणं विलोकनीयम्।

३. का० श्रौ० ४।११।५

सम्भृत्य निवपनकाले सम्भाराणामुपरि तान् स्तृणीयात्। ततो 'भूमिर्भूम्ना' इति चतसृभिः सार्पराज्ञीभिर्गार्हपत्यमादध्यात्। इतरानग्नीन् मध्यन्दिने काले आदध्यात्। उपोलवाः पर्ववन्तः संवत्सरमुपशुष्का दर्भाः प्रणयनीयेध्मस्य स्थानं प्रतिपद्यन्ते। एवंविधैः दर्भैर्ज्वलन्तमग्निमुद्धृत्य आहवनीयमादध्यात्। 'यत्वा क्रुद्धः परोवप'[1] इति मन्त्रेण दक्षिणाग्निमादध्यात्। 'यत्ते मन्युपरोप्तस्य'[2] इतीतरानग्नीनादध्यात्। 'मनो ज्योतिर्जुषताम्'[3] इति बृहस्पतिवत्यर्चा सर्वानग्नीनुपतिष्ठेत। आहितस्याग्नेः शमने कृते अनेन मन्त्रेणोपस्थानं भारद्वाजाभिमतं वेदितव्यम्। अग्न्याधेये योऽयं तूष्णींहोमो विहितः सोऽत्र 'सप्त ते अग्ने समिधः सप्त जिह्वा' इति समन्त्रकं कर्त्तव्य इति विशेषः। अत्राग्निदेवताकः पञ्चकपालद्रव्यको वा यागः कर्त्तव्यतया विहितः। यदि पञ्चकपालं यागं कुर्यात्तदा गायत्री[4]च्छन्दस्के ऋचौ संयाज्ये भवतः। यदि पुनरष्टाकपालं कुर्यात्तदा पङ्क्त्यौ[5] संयाज्ये कर्त्तव्ये। अस्यामिष्टौ यद्देव हविर्देवतासंयुक्तं क्रियते तत् सर्वमाग्नेयं भवति। अत्र पञ्चदश सप्तदश वा सामिधेन्यो भवन्ति। सामिधेनीभ्य आरभ्योत्तरमनूयाजपर्यन्तं सर्वमुपांशु[6] कर्त्तव्यम्। स्विष्टकृतमुच्चैर्जुहुयात्।

---

१. 'यत्वा क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि' (तै० सं० १।५।३।२) इति समग्रो मन्त्रः।

२. 'यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्' (तै० सं० १।५।३।२) इति समग्रो मन्त्रः।

३. 'मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञं समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम्' इति समग्रो मन्त्रः।

४. 'यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा। तं घेदग्निर्वृधाऽवति' (तै० सं० २।६।११।३) इति गायत्री अनुवाक्या। 'विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः। अधा ते सुम्नमीमहे' (तै० सं० २।६।११।४) इति गायत्री याज्या। इमे गायत्रीच्छन्दस्के संयाज्ये वेदितव्ये।

५. 'अभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः' 'एभिर्नो अर्कैर्भवा नो अर्वाङ् सुवर्णज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः' (तै० सं० ४।४।४।७) इति स्विष्टकृतो याज्यानुवाक्ये।

६. 'पौनराधेयिकी च प्रागुत्तमादनुयाजात्' (आ० श्रौ० २।१५।१०) इत्याश्वलायनोऽपि उत्तमानुयाजात् प्रागुपांशुत्वं विदधाति।

तस्यां पुनराधेयेष्टौ पञ्चानां प्रयाजानां मध्ये आदितश्चतुर्षु प्रयाजेषु विभक्ति-[1] सहितः पाठ उभाभ्यामपि सूत्रकाराभ्यां प्रदर्शितः। तत्रोभयोः विभक्तिकरणे कश्चन भेदो दर्शनपथमवतरति। आद्यानां चतुर्णां विभक्तिचतुष्टयनियमेऽपि उत्तमप्रयाजानूयाजौ अविभक्तिकौ कर्त्तव्याविति सूत्रकारयोरभिप्रायो गम्यते। विभक्तिमुक्त्वा प्रयाजयाज्यया वषट्कुर्यादिति विकल्पोऽपि आपस्तम्बेन प्रदर्शितः। तत्र प्रथमस्य प्रयाजस्य 'ये यजामहे३ समिधो भूर्भुवः स्वरग्नौ समिधो अग्न आज्यस्य' इत्याकारो भवति। एवमन्येष्वपि प्रयाजेषु द्रष्टव्यः। 'अग्निं स्तोमेन बोधय'[2] इत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या। 'अग्न आयूंषि पवसे'[3] इति सौम्यस्य। 'अग्निर्मूर्धा' इति वा सौम्यस्य पुरोऽनुवाक्या भवति। तत्र प्रथमपक्षे सोमस्य स्थानेऽग्निं पवमानं देवतात्वेन निगमयेत्। द्वितीयपक्षे तु केवलमग्निमेव देवतां कुर्यात्।

आश्वलायनस्तु पुनराधेयेष्टौ 'समिधाग्निं दुवस्यत' 'एह्यू षु ब्रवाणि ते'[4] इति द्वावेव अग्निदेवताकावाज्यभागौ अभिधाय तौ बुद्धिमदिन्दुमन्तौ कर्त्तव्याविति स्वमतेऽभिप्रैति। तत्रावाहनादिषु[5] निगमेषु सगुणयोरेवानुवृत्तिः सूत्रकाराभिमता

१. 'समिधो अग्नाग्न आज्यस्य वियन्तु' 'तनूनपादग्नावग्न आज्यस्य वेतु' 'इडो अग्निनाग्न आज्यस्य वेतु' 'बर्हिरग्निमग्न आज्यस्य वेतु' इति यथाक्रममापस्तम्बीयाना सविभक्तिकाः प्रथमद्वितीयतृतीयचतुर्थप्रयाजाः। एवमाश्वलायनीयानां 'समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु' 'तनूनपादग्निमग्न आज्यस्य वेतु' 'इडो अग्निनाऽग्न आज्यस्य व्यन्तु' 'बर्हिरग्निरग्न आज्यस्य वेतु' इति क्रमेण चत्वारः प्रयाजाः। तत्र नराशंसिनां 'नराशंसोऽग्निमग्न आज्यस्य वेतु' इति सविभक्तिको द्वितीयः प्रयाजो भवति।

२. 'अग्निं स्तोमेन बोधय समिधा नो अमर्त्यम्। हव्या देवेषु नो दधत्' ( तै० सं० ४।१।११।४ ) इति समग्रा पुरोऽनुवाक्या।

३. 'अग्न आयूंषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्' ( ऋ० सं० ९।६६।१९ ) इति समग्रा पुरोऽनुवाक्या।

४. ऋ० सं० ८।४४।१ ; ६।१६।१६

५. 'विश्वतः सोम हविषियम्,' 'अमृताय सोम दिवि,' 'इह त्वष्टारमग्रियम्,' 'देव त्वष्टर्विरराणः,' 'देवानां पत्नीरुशती.,' 'उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नायी,' 'राकामहं सुहवाम्,' 'यास्ते राके सुमतयः,' 'सिनीवालि पृथुष्टुके। हविः सिनीवाल्यै जुहोतन,' 'कुहूमहं सुवृतम्,' 'कुहूर्देवानाममृतस्य' इतीमे पत्नीसंयाजानां मन्त्रखण्डाः। तत्र सर्वत्रापि देवतावाचकपदानन्तरं सविभक्तिकोऽग्निशब्दः प्रयोक्तव्यः। स एव प्रकारो भाष्यकारदर्शित एवम् 'सोमाग्ने हविषियम्, अमृताय सोमाग्ने दिवि, इह त्वष्टारमग्निमग्रियम्, देव त्वष्टरग्ने विरराणः, देवानां पत्नीरग्निरुशतीः, देवपत्नीरग्निरिन्द्राग्नी, राकामग्निमहम्, यास्ते राकेऽग्ने, सिनीवाल्यग्ने पृथुष्टुके, सिनीवाल्या अग्नये जुहोतन, कुहूमग्निमहम्, कुहूरग्निर्देवानाम्' इति।

दृश्यते। अनुब्राह्मणिन[1] आचार्याः केचन 'अग्निर्वृत्राणि' इति प्राकृतं केवलाग्निदेवताकं प्रथममाज्यभागमिच्छन्ति। तेषां मते 'अग्न आयूंषि पवसे' इति केवलाग्निदेवताको द्वितीय आज्यभागः कर्त्तव्यो भवति। इदमनुब्राह्मणमतं प्रायश आपस्तम्बमतेन संवदति। अस्यामिष्टौ याः पत्नीसंयाजानामृचस्ता अग्निशब्दघटिताः कुर्यात्। यथाप्रकृति आज्यभागौ पत्नीसंयाजाश्च कर्त्तव्या इत्यपि मतान्तरमापस्तम्बेन प्रदर्शितम्। 'अग्ने तमद्य' 'अधा ह्यग्ने'[2] 'आभिष्टे अद्य' 'एभिर्नो अर्कैः'[3] इति चतस्र ऋचो यथाक्रमं प्रधानस्याग्नेयस्य द्वे, स्विष्टकृतश्च द्वे याज्यानुवाक्ये भवन्ति। आश्वलायनमते प्रधानस्य 'अधा ह्यग्ने क्रतोर्भद्रस्य' 'आभिष्टे अद्य गीर्भिर्गृणन्तः'[4] इत्यृचावग्नेर्याज्यानुवाक्ये। स्विष्टकृद्यागस्य 'एभिर्नो अर्कैः' 'अग्ने तमद्याश्वं न स्तोमैः' रिति द्वे याज्यानुवाक्ये[5] भवतः।

तत आपस्तम्बाचार्यः 'पुनरूर्जा' 'सह रय्या'[6] इत्याभ्यां पुरोडाशेज्यायाः पुरस्तादेकामुपरिष्टादन्यामाहुतिं कर्त्तव्यतया विदधाति। तत्र प्रथममन्त्रेण प्रयाजानां पुरस्तादाहुतिमेकां कुर्यात्, द्वितीयेन चानूयाजानामुपरिष्टादन्यां कुर्यादिति विकल्पमपि प्रदर्शयति। उपरिष्टात् प्रयाजानां पुरस्तादनूयाजानामिति विपरीतक्रमेणापि आहुतिद्वयं मतान्तरत्वेन सूत्रकारेणोपन्यस्तम्।

अस्यामेव पुनराधेयेष्टौ त्रयाणामनुयाजानामनुष्ठानावसरे सविभक्तिकः कश्चन पाठ उभयोः सूत्रकारयोरभिमतो दृश्यते। तत्रापस्तम्बीयानां 'देवे अग्नौ बर्हिर्वसुवने वसुधेयस्य वेतु' इति प्रथमोऽनुयाजः। 'देवो अग्निर्नराशंसो वसुवने वसुधेयस्य वेतु' इति द्वितीयः। एवमाश्वलायनीयानाञ्च 'देवं बर्हिरग्नेर्वसुवने

---

१. ब्राह्मणमनुसरन्ति ये आचार्या त एव अनुब्राह्मणिनः। एतेषां मतं प्रायशः सूत्रकारेण मतान्तरप्रदर्शनार्थमुद्धृतम्।

२. 'अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदि स्पृशम्। ऋध्यामात ओहैः' 'अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ' इत्याग्नेयस्य समग्रे याज्यानुवाक्ये।

३. तै० सं० ४।४।४।७

४. ऋ० सं० ४।१०।२ ; ४।१०।४

५. ऋ० सं० ४।१०।३ ; ४।१०।१

६. तै० सं० १।५।३।२

वसुधेयस्य वेतु' 'देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेतु' इति प्रथमद्वितीयावनूयाजौ। उभयत्रापि कश्चन विशेषः सुधीभिरवलोकनीयः। अन्तिमे प्रयाजेऽन्तिमेऽनूयाजे च सविभक्तिकः पाठो निषिद्धः। तत्रोच्चैः सम्प्रैषस्तु भवत्येव।

अत्र दक्षिणादाने कश्चन विशेषं सूत्रकारः प्रदर्शयति। अग्न्याधेये या दक्षिणा देयत्वेन विहितास्ता अप्यत्र देयाः। तेन अग्न्याधेयपुनराधेययोर्दक्षिणासमुच्चय एव सूत्रकाराभिमतो दृश्यते। अयं पक्षस्तु मीमांसक[1]मतविरुद्धः। अस्मिन् पुनराधेये पुनः संस्कृतो रथः, पुनरुत्स्यूतं[2] वासः, अवसन्नो गौः, शतमानपरिमितञ्च हिरण्यं दक्षिणा भवन्ति। मतान्तरेण पुनः संस्कृतो रथः, पुनरुत्स्यूतं कम्बलञ्चेति दक्षिणाद्वयं पुनराधेयफलावाप्तये पूर्वोक्ताभिर्दक्षिणाभिर्विकल्पते। यदीतराणि द्रव्याणि न लभ्येरन् तदा पुनरुत्सृष्टोऽनड्वानेव दक्षिणात्वेन देयः। एतावता इष्टिरियं परिसमाप्यते।

## आग्निवारुणीष्टिः

अस्य पुनराधेयस्याङ्गतया द्वितीया आग्निवा[3]रुणीष्टिरापस्तम्बेन विहिता। नेयमिष्टिराश्वलायनाभिप्रेता दृश्यते। अग्निवरुणदेवताक एकादशकपालद्रव्यकोऽयमनुनिर्वाप्यः स्थानापत्तिबलात् सर्वेषां पवमानहविरादीनामनुनिर्वाप्यानां स्थानं गृह्णाति। ऐन्द्राग्नाग्नावैष्णवाग्नीषोमीयानां द्विदेवत्ययागानां स्थानमयं प्राप्नोतीति केषाञ्चन मतम्। अत्र द्विदेवत्यरूपलिङ्गस्य[4] स्थानापेक्षया प्राबल्यमेव कारणं बोध्यम्। अन्यत् सर्वं पौर्णमासवदनुष्ठेयम्। अस्याः समाप्त्यनन्तरमेव पुनराधेयं समाप्तं भवति।

ततः सूत्रकारेण तृतीयाधाने कश्चन विशेष उच्यते। 'यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमान् जुहुयात्' इति विशेषवचनात् यः प्रथममग्नीनाधाय ततो द्वितीयं पुनराधेयं कृत्वा पुनस्तृतीयमाधत्ते तस्यैते होमा

१. पू० मी० १०।३।२० ; तत्र नैमित्तिके पुनराधेये प्राकृतदक्षिणाया बाध एव सिद्धान्तितः।

२. दाब्यार्थं सूत्रैरुत्स्यूतं पुनरुत्स्यूतमिति रुद्रदत्तः। छिन्नं सत् सूचीतन्तुभ्यां स्यूतं पुनरुत्स्यूतमिति सायणपादाः। (तै० सं० १।५।२।४)

३. 'त्वन्नो अग्ने' 'स त्वन्नो अग्ने' (तै० सं० २।५।१२।३) इत्याग्निवारुणस्य याज्यानुवाक्ये।

४. पू० मी० ३।३।१४

भवन्ति। तत्र प्रथमत आधानम्, द्वितीयं पुनराधानम्, तृतीयमाधानमिति। तस्मिन् तृतीयाधाने 'लेकः सलेकः सुलेकः' 'केतः सकेतः सुकेतः' 'विवस्वाँ अदितिः'[1] इति मन्त्रत्रयेण त्रीन् लेकहोमान् जुहुयात्। नेदं तृतीयमाधानं नायं विशेषश्चाश्वलायनेन उट्टङ्कितः।

## प्रायश्चित्ताधानम्

अत्रैव प्रसङ्गादापस्तम्बः प्रायश्चित्तं पुनराधानमुपदिशति। आधानं त्रिविधम्-प्रथमाधानम्, पुनराधानम्, प्रायश्चित्ताधानमिति। प्रथममग्निसिद्ध्यर्थं क्रियमाणमाधानं प्रथमाधानम्। प्रजापशुहिरण्यादिफललाभार्थं पुनः क्रियमाणमाधानं पुनराधानम्। अग्निनाशादौ दोषनिर्हरणाय क्रियमाणमाधानं प्रायश्चित्ताधानम्। तत्र समारूढेष्वग्निष्वरणिनाशोऽग्नि[2]नाशः। स चारणिनाशो द्विविधः-शक्तिनाशः स्वरूपनाशश्च। एवमरण्योरुभयविधनाशे तदेव पुनराधेयं प्रायश्चित्ततया कर्त्तव्यम्। तत्रोभयोर्गार्हपत्याहवनीययोर्विनाशकाले सूर्योदये अस्तमये च तदेव पुनराधेयं प्रायश्चित्तं भवति। अत्र पुनराधेयशब्दस्य रूढ्यर्थमङ्गीकृत्य पुनराधानमेव प्रायश्चित्ततया कर्त्तव्यमित्याश्मरथ्यो मन्यते। पुनः आधेयमर्थात् आधानमेव पुनः कर्त्तव्यमित्यालेखनोऽभिप्रैति। आलेखनमतप्रदर्शनेनैव विकल्पसिद्धौ आश्मरथ्यमतप्रदर्शनं सूत्रकारस्य स्वमतप्रख्यापनार्थं बोध्यमिति रुद्रदत्ताभिप्रायो गम्यते। भारद्वाजोऽप्यत्र[3] आपस्तम्बवत् पुनराधेयमेव प्रायश्चित्ततया विदधाति। विस्तरस्तु प्रायश्चित्तप्रकरणे द्रष्टव्यः। अतः समासमाधानं पुनराधानं प्रायश्चित्ताधानञ्चेति।

---

१. तै० सं० १।५।३।२

२. अरणिसमारोपणे कृते पुनर्मन्थने क्रियमाणे यदि कालद्वयं यावन्न जायतेऽग्निः, सोऽग्निनाश इत्युच्यते।

३. भा० श्रौ० ५।२१।१४

# द्वितीयोऽध्यायः

## अग्निहोत्रप्रकरणम्

आधानानन्तरं दर्शपूर्णमासेष्टिरपि कर्त्तुं शक्यते सोमोऽपि। उभयत्रापि सङ्कल्पात् पूर्वं सायं प्रातःकाले च प्राप्ते अग्निहोत्रं[1] कर्त्तव्यम्। 'यावज्जीवमग्निहोत्रं जुहोति' इति विधिः। अत्र णमुल्प्रत्ययान्तस्य यावज्जीवशब्दस्य जीवन् जीवन् इत्यर्थः। आहिताग्निर्यदा यदा जीवति तदा तदा अग्निहोत्रं कर्त्तव्यमिति विध्यर्थः प्रतीयते। तदिदमनुपपन्नम्। अतः 'सायं जुहोति' 'प्रातर्जुहोति' इति विध्येकवाक्यतायां सत्यां सायंकालावच्छिन्ने प्रातःकालावच्छिन्ने च जीवने निमित्ते सति अग्निहोत्रं कर्त्तव्यमिति विध्यर्थसंकोचः कर्त्तव्यः। अयमर्थो यावज्जीवा[2]धिकरणन्यायसिद्धः। इदं कर्म स्वयं यजमानेन कर्त्तुं शक्यमध्वर्युद्वारापि कर्त्तुं शक्यम्। अत्र च 'दध्ना जुहोति' 'पयसा जुहोति' इति विहितदधिपयसोः विकल्पितत्वं द्रव्यत्वम्। अस्य च कर्मणः सायमारभ्य प्रातरपवर्गः। तत्र 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत् सूर्याय च प्रजापतये च प्रातः' इति विधिबलात् सायंहोमे अग्निप्रजापती देवते, प्रातर्होमे च सूर्यप्रजापती देवते भवतः।

### अग्न्युद्धरणम्

सायं प्रातरिति कालद्वयानुष्ठानादिदमेकं कर्म निष्पन्नं भवति। तत्र सायंकाले यदा सूर्यरश्मयो भूभागं परित्यज्य वृक्षोपरि प्रकाशमाना दृश्यन्ते तदा सायंहोमा अनुष्ठेयाः। प्रातःकाले च प्राच्यां दिशि यदा रश्मय आविर्भवन्ति तदा प्रातर्होमाः कर्त्तव्याः। अयमेव होमानुष्ठानकाल आपस्तम्बाभिमतो

---

१. मीमांसकैरग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वं प्रथमचतुर्थचरणे व्यवस्थापितम्। हूयत इति होत्रं होमः। अग्नौ होत्रमग्निहोत्रमित्येका व्युत्पत्तिः। एवमग्नये होत्रं होमो यस्मिन् तदग्निहोत्रमिति द्वितीया व्युत्पत्तिः। प्रथमव्युत्पत्त्या होमाधिकरणभूतोऽग्निः प्रतिपाद्यते। द्वितीयव्युत्पत्त्या च देवतारूपोऽग्निः प्रतिपाद्यते। उभयोरपि गुणयोः प्रापणार्थमग्निहोत्रपदं न समर्थम्। यतश्चाधिकरणीभूताग्नेः 'यदाहवनीये जुहोति' इति प्राप्तिरस्ति। एवं देवतारूपस्यापि गुणस्य प्रापकं 'यदग्नये च प्रजापतये च सायं जुहोति' इति विधिरूपं शास्त्रं केचिदुपस्थापयन्ति। अपरे च 'अग्निर्ज्योतिरग्निः स्वाहा' इति मन्त्रवर्णस्य देवतारूपाग्निप्रापकत्वमभिप्रयन्ति। एवञ्च तस्याग्निहोत्रपदेन विधित्सितस्य गुणस्याधिकरणरूपस्य वा देवतारूपस्य वा प्रापकं शास्त्रमन्यदस्तीति अग्निहोत्रपदं नामधेयमिति।

२. जै० सू० २।४।१

दृश्यते। तत्र सायमग्निहोत्रे प्रथममङ्गं गार्हपत्याग्निप्रदीपनम्। तदनन्तरमाहवनीयार्थं तदुद्धरणं कर्त्तव्यम्। यदि अध्वर्युकर्त्तृकमिदमुद्धरणं भवेत्तदा यजमानस्तम् 'उद्धर' इति सम्प्रेष्येत्। यदि स्वयंकर्त्तृकमुद्धरणं तदा न सम्प्रैषः।

आश्वलायनोऽपि अग्निहोत्रं विदधानो नैकविधाद्दक्षिणाग्नेरानयनमुपदिशति। तन्मते गार्हपत्यं प्रज्वाल्य यजमानो दक्षिणाग्निमानयेत्। वैश्यकुलाद् यस्मात् कस्माद्वित्तवतो वा गृहाद् दक्षिणाग्निमाहरेत्। एके पुनः गार्हपत्यादेव दक्षिणाग्नेरुद्धरणं कार्यमिति वदन्ति। अथवा नित्यधृतस्य दक्षिणाग्नेः प्रज्वलनं कर्त्तव्यम्। अरणिमन्थनं वा तत्र कार्यम्। एतेषामन्यतमप्रकारेण दक्षिणाग्निं सम्पाद्य ततो गार्हपत्याज्ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत्। तत्रोद्धरणमन्त्र[1] आपस्तम्बाचार्येण कीर्तितः। आश्वलायनेन तु 'देवं त्वा देवेभ्यः श्रिया उद्धरामि' इत्यापस्तम्बविलक्षण उद्धरणमन्त्रः समाम्नातः। उद्धरणावसरे यजमानकर्त्तृकोऽभिमन्त्रणमन्त्रः[2] सायंप्रातर्भेदेनापस्तम्बेन प्रतिपादितः। आश्वलायनोऽपि[3] उद्ध्रियमाणाभिमन्त्रणमन्त्रमापस्तम्बवदेव निर्दिशति।

### अग्निस्थापनम्

तत आहवनीयस्य पुरस्ताद् गत्वा उदङ्मुखः प्रत्यङ्मुखो वा सायमाहवनीयायतनेऽग्निमवस्थापयेत्। तत्रैव प्राङ्मुखो भूत्वा प्रातरग्निमवस्थापयेदिति विशेषः। आदित्याभिमुखो भूत्वा 'अमृताहुतिम्'[4] इत्यादिमन्त्रेणाहवनीयायतनेऽग्निं निदध्यादित्याश्वलायनोऽभिप्रैति। तत्र प्रातःकाले आदित्योदयात् पूर्वमाहवनीयात् पश्चात्स्थितेन निधानं, सायं तु पुरस्तात्स्थितेनेति विशेषोऽपि सूत्रकारेणाभिहितः।

---

१. 'वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाऽध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि' इत्यापस्तम्बोक्त उद्धरणमन्त्रः।

२. 'भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार। अह्ना यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मात्' इति सायमभिमन्त्रणमन्त्रः। प्रातः 'रात्रिया यदेनः' इत्येतावान् विकारः। अन्यत् समानम्।

३. 'उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार। अह्ना यदेनः कृतमस्ति किञ्चित् सर्वस्मान्मोद्धृतः पाहि तस्मात्' इत्याश्वलायनोक्तः सायमभिमन्त्रणमन्त्रः। प्रातः पुनः 'अह्ना यदेनः' इत्यस्य स्थाने 'रात्र्या यदेनः' इति कृत्वा प्रणयेत्।

४. आ० श्रौ० २।२।४

## इध्माधानम्

तदनु यजमानः स्वयमेव 'विश्वदानीमाभरन्तो नातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम' इति मन्त्रेण इध्मानाहृत्य 'यदग्ने यानि कानि च'[1] इत्येतैः पञ्चभिर्मन्त्रैः प्रतिमन्त्रं पञ्चस्वग्निषु तानादध्यात्। तत्राहवनीये वरिष्ठमिध्ममादध्यादिति सूत्रकाराभिप्रायः। येनैव क्रमेणाग्नय आहितास्तामेव आनुपूर्वीमवलम्ब्य इध्माधानं कर्त्तव्यम्। अथवा आहवनीयादारभ्य क्रममपरित्यज्य तत् कर्त्तव्यम्। तस्मिन्निध्माधाने कांश्चन धर्मविशेषानापस्तम्बः प्रतिपादयति—अग्नेर्बलवत्त्वसम्पादनम्, हुताया आहुतेर्भूमिपर्यन्तं यथा गमनं न स्यात्तथा इध्मानामाधानम्, गार्हपत्याहवनीययोर्मध्ये गमनाभावः, गार्हपत्यस्याग्नेराहवनीयानुगमनेऽन्तरा सञ्चरणम्, होमानन्तरं तस्य प्रदेशस्य सञ्चार्यत्वमिति। एते आपस्तम्बोक्ता धर्मविशेषा आश्वलायनेन न कीर्त्तिताः।

## आहवनीयप्रणयनम्

पूर्वमाहवनीयस्य सायंप्रातर्होमयोः पृथक् प्रणयनमुक्तम्। अत्र तु सायमुपक्रम्य प्रातरपवर्गिणो होमद्वयस्यैककर्माभिप्रायेणैकमेव प्रणयनमुच्यते। यदि होमद्वयार्थं सङ्कल्प्य आहवनीयप्रणयनं कुर्यात्तर्हि रात्रौ तस्य धारणमावश्यकम्। गतश्रियो[2] यजमानस्याधानादारभ्य नित्य आहवनीयो धार्यते। भारद्वाजस्तु[3] सभ्यावसथ्ययोरपि नित्यधारणमभिप्रैति। गार्हपत्यधारणं तु नित्यमित्यापस्तम्बमतात् प्रतीयते। तत्राधानकाले यदि दक्षिणाग्निर्मथित्वाहितस्तदा तमपि सर्वं नित्यमेव धारयेयुः। यदि तदानीमयमाहार्यस्तदा स्वयोनितो दक्षिणाग्न्यायतनादेवाहरणं कर्त्तव्यम्। आश्वलायनमतात्तु आधानादारभ्य

१. 'यदग्ने यानि कानि' 'यदत्त्युपजिह्विका' 'रात्रिं रात्रिमप्रयावम्' 'नाभा पृथिव्याः समिधानम्' 'याः सेना अभित्वरीः' इति क्रमेण पञ्चर्चः। (तै० सं० ४।१।१०।१-५) तत्र प्रथमयर्चा गार्हपत्ये समिधमेकामादध्यात्। द्वितीयया दक्षिणाग्नावेकाम्। तृतीयया आहवनीये वर्षिष्ठामेकाम्। चतुर्थ्या सभ्य एकाम्, पञ्चम्याऽऽवसथ्य एकामिति क्रमः।

२. गता प्राप्ता यस्य श्रीः स गतश्रीः। 'त्रयो वै गतश्रियः' इति श्रुतावुक्तम्। ब्राह्मणक्षत्रियवैश्या इत्यर्थः।

३. भा० श्रौ० ६।८।१०

द्वादशरात्रप्रभृति त्रयोऽप्यग्नयोऽजस्रं धारणीया भवन्ति। अतस्त्रयाणामप्यग्नीनां नित्यधारणं[1] कर्त्तव्यमिति तस्याभिप्रायो गम्यते।

### अग्न्यलंकारः

तदनन्तरमग्नीन् संशोध्य तान् गन्धपुष्पादिभिरलंकुर्युः[2]। तत्र सायंहोमे होमात् पूर्वमलंकारः, प्रातर्होमे च ततः परमिति सूत्रकाराशयः। अस्यैव वैपरीत्यं केचन समामनन्ति। कालद्वयेऽपि होमात् पूर्वमलंकार इति केचिदभिप्रयन्ति। विषयमिममधिकृत्य आश्वलायनेन न किमपि उक्तम्।

### परिस्तरणम्

तत उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्[3] परिस्तृणीयात्। गार्हपत्यरूपैकाग्निपरिस्तरणपक्षः, गार्हपत्याहवनीयरूपाग्निद्वयपरिस्तरणपक्षश्चेति मतान्तरत्वेन सूत्रकारेण प्रदर्शितः।

### पात्रसादनमग्निहोत्रीदोहनम्

अस्मिन्नग्निहोत्रे खदिरकाष्ठनिर्मितः स्रुवः, विकङ्कतकाष्ठनिर्मिता अग्निहोत्रहवणी च पात्रे भवतः। अग्निहोत्रस्थाली हस्ताग्रतुल्याकृतिरूर्ध्वकपाला हस्तनिर्मिता च भवति। तत्र विहारस्य[4] दक्षिणतः अग्निहोत्री[5] गौः तिष्ठति। तस्या 'इडासि' इत्याद्यभिमन्त्रणं यजमानेन कर्त्तव्यम्। ततः समन्त्रकं वेदिदेशाभिमर्शनं कृत्वा 'पूषासि' इति दक्षिणतो गोर्वत्समुपसृज्य प्रदक्षिणं पर्यावृत्य तं प्राच्यामवस्थाप्य गां दुह्यात्। अत्र दोग्धा यजमानोऽध्वर्युर्वा भवति। शूद्रस्तु गोदोहनं न कुर्यात्। 'दुह्याद्वा'[6] इति पक्षान्तरमाश्रित्य शूद्रस्यापि दोहनमापस्तम्बः

---

१. अत्र आपस्तम्बश्रौतसूत्रस्य भाष्यकारो धूर्त्तस्वामी वदति—'आश्वलायनमतिस्तु सर्वेषु पक्षेष्वाधानप्रभृति सर्वे गतश्रियो धार्याः' इति (आप० श्रौ० भा० ६।२।१२)

२. 'अग्ने गृहपते शुन्धस्व' इति गार्हपत्यम्, 'अग्ने वह्ने शुन्धस्व' इति दक्षिणाग्निम्, 'अग्ने सम्राट् शुन्धस्व' इत्याहवनीयम्, 'अग्ने सभ्य शुन्धस्व' इति सभ्यम्, 'अग्ने परिषद्य शुन्धस्व' इत्यावसथ्यम्। अनेनैव क्रमेण पञ्च अग्नीनलंकुर्यात्।

३. प्रकृतसूत्रे 'अग्नीन् परिस्तृणाति' इत्यविशेषवचनात् सभ्यावसथ्यसहितानां पञ्चानामप्यग्नीनां परिस्तरणं सूत्रकाराभिमतं दृश्यते। भारद्वाजस्तु त्रयाणामेव गार्हपत्याहवनीयदक्षिणाग्नीनां परिस्तरणं कण्ठत उद्घोषयति। आपस्तम्बोऽपि मतान्तरत्वेन एकस्याग्नेरग्निद्वयस्य वा परिस्तरणं प्रदर्शयति।

४. विहारो यज्ञानुष्ठानस्थानम्।

५. यस्याः पयो दुग्ध्वा अग्निहोत्रं क्रियते सा अग्निहोत्री गौः।

६. आप० श्रौ० ६।३।१२

कीर्त्तयति। इदं दोहनमग्निहोत्रस्थाल्या गोदोहनेन[1] च कर्त्तव्यम्। दोहनारम्भे प्रस्नवनार्थं[2] स्तनस्पर्शनं न कर्त्तव्यम्। यावदुपलम्भं दुग्धं दुह्यात्। उपसृष्टां दुह्यमानां गां धाराघोषं च यजमानोऽनुमन्त्रयेत। सायं सूर्यास्तादनन्तरं दोहनं कर्त्तव्यम्। अयं गोदोहनप्रकारविशेष आपस्तम्बाभिमतः। नायमाश्वलायने समवलोक्यते।

## होमकालः

तदनन्तरमापस्तम्बेन सायंप्रातर्होमकालः समाम्नातः। ईषदस्तमिते सूर्ये सायंहोमः कार्यः। अहोरात्रयोः सन्धौ स होमः कर्त्तव्य इति शैलालिब्राह्मणोक्तं[3] मतमत्र सूत्रकारेणानूदितम्। प्रथमनक्षत्रं दृष्ट्वा, प्रदोषकाले सर्वेषु नक्षत्रेषूदितेषु, रात्रौ वेति त्रयः सायंहोमकाला निर्दिष्टाः। सर्वैर्मिलित्वा चत्वारो भवन्ति। प्रातर्होमकालास्तु चत्वार एव निर्दिश्यन्ते। तत्रोषसि प्राच्यां जातप्रकाशायाम्, उदयात् पूर्वस्मिन् समये, अर्धोदयकाले, सम्पूर्णोदये वा प्रातर्होमः कर्त्तुं शक्यते।

आश्वलायनस्तु व्युष्टायामुषस्युदितायामादित्योदयात् प्राक् प्रातर्होमकालं निर्दिशति। अस्तमिते सूर्ये सायंहोमस्तन्मते कर्त्तव्यः। प्रदोषान्तः सायंहोमकालः, सङ्गवान्तः प्रातर्होमकाल इत्यपि काल[4]विशेषस्तेन प्रतिपादितः। तत्राग्निप्रणयनानन्तरं होमसमाप्तिपर्यन्तमाहिताग्नेर्व्रतचर्यामयं सूत्रकारः समुपदिशति। यदि आहिताग्निरनुदितहोमी[5] भवेत्तर्हि स प्रयोगपरिसमाप्तिपर्यन्तं व्रतचरणं कुर्यात्। यदि अस्तमिते होमं कुर्यात्तदा तस्यापि व्रतचरणं तदङ्गत्वेनाचमनमपि सूत्रकारेण कर्त्तव्यतया विहितम्।

## परिषेचनम्

तत्रभवानापस्तम्बो होमकालान् विधाय पत्नीवतो यजमानस्याग्निहोत्रं कर्म समुपदिशति। होमकाले यजमानसमीपे पत्न्या अवस्थातव्यम्। विहारस्य दक्षिणत उदीच्यां दिशि सा उपविशेत्। यजमानस्तु आहवनीयस्यापरेण

१. गावो दुह्यन्ते यस्मिन् पात्रे तद् गोदोहनम्।

२. दोहनार्थमुन्मुखीकरणं प्रस्नवनम्।

३. इदं ब्राह्मणमिदानीं नोपलभ्यते।

४. आ० श्रौ० ३।१२।१-२

५. सूर्योदयात् परं यच्छाखिनोऽग्निहोत्रं कर्त्तव्यतया विहितं स उदितहोमी। ततः पूर्वं तत् कुर्वाणा अनुदितहोमिनः। तत्र बह्वृचाः कातीयाः छन्दोगाश्च अनुदितहोमिनः। काठास्तैत्तिरीया मैत्रायणीयाश्च उदितहोमिनः।

दक्षिणाऽतिक्रम्य स्वस्थाने चोपविश्य 'विद्युदसि विद्य मे पाप्मानमृतात् सत्यमुपैमि मयि श्रद्धा' इत्यप आचम्य सायंहोमे 'ऋतं त्वा सत्येन परिषिञ्चामि' इति, प्रातर्होमे 'सत्यं त्वर्तेन परिषिञ्चामि' इति च मन्त्रेणाग्नित्रयं परिषिञ्चेत्। तत्रादौ आहवनीयं ततो गार्हपत्यं तदनन्तरं च दक्षिणाग्निं परिषिञ्चेत्। अथवा गार्हपत्यमाहवनीयं दक्षिणाग्निमित्येवं क्रमेण परिषेचनं कर्त्तव्यम्। अथवा येन क्रमेणाग्नय आहितास्तमेव क्रममाश्रित्य परिषेचनं करणीयमिति। एवमग्नित्रयं जलेन परिषिच्य 'यज्ञस्य सन्ततिरसि' इत्यादिमन्त्रेण गार्हपत्यादारभ्य आहवनीयपर्यन्तामविच्छिन्नामुदकधारां वेद्यां स्रावयेत्।

आश्वलायनोऽपि त्रयाणामग्नीनां परिसमूहनं पर्युक्षणञ्च विदधाति। तन्मते यजमानो दक्षिणाग्निं सोदकेनाऽवाङ्मुखेन पाणिना तूष्णीं त्रिः परिसमुह्य तथैव गार्हपत्यमाहवनीयं च परिसमुह्य 'ऋतसत्याभ्यां त्वा पर्युक्षामि' इति मन्त्रं जपित्वा पुनः पुनरुदकमादाय त्रिस्त्रिरेकैकमग्निं पर्युक्षेत्। तत्र पर्युक्षणे अग्नीनामुत्पत्तिक्रमस्य होमक्रमस्य च विकल्पौ द्रष्टव्यः। तत्र दक्षिणाग्निमेव प्रथमं पर्युक्षेत्, ततो गार्हपत्यं तदनन्तरमाहवनीयमिति पर्युक्षणे क्रमो वेदितव्यः। अतः 'अग्नीनां दक्षिणः पिता, गार्हपत्यः पुत्रः, पौत्रः आहवनीयः' इत्यर्थवादवचनमुपपन्नं भवति। तस्मादनेनैव क्रमेण पर्युक्षेत्। परिसमूहनेऽपि अयमेव क्रमः प्रत्येतव्यः। तत्र गार्हपत्यादारभ्य आहवनीयपर्यन्तं 'तन्तुं तन्वन्रजसो भानुमन्विहि' इत्यविच्छिन्नामुदकधारां हरेत्।

अधिश्रयणम्

ततो 'धृष्टिरसि ब्रह्म यच्छ' इत्युपवेषमादाय गार्हपत्यादुदगङ्गारान् पृथक्कृत्य व्यवेतान् तान् गार्हपत्येन कृत्वाऽभिमन्त्र्य सायम् 'अग्नय आदित्यं गृह्णाम्यह्ने रात्रिम्' इति जपेत्, 'आदित्यायाग्निं गृह्णामि रात्रिया अह्नः' इति प्रातः। तेष्वङ्गारेषु अग्निहोत्रार्थं पयः 'इडायास्पदम्'[1] इति मन्त्रेण अधिश्रयेत्।

आश्वलायनाचार्योऽपि अधिश्रयणं विदधानो नित्यस्याग्निहोत्रस्य पय एव द्रव्यं विधत्ते। तत्र यजमानस्तूष्णीं गार्हपत्यस्य पश्चाद्दक्षिणोत्त[2]रिणोपस्थेनोपविश्य

---

१. 'इडायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इति समग्रो मन्त्रः।

२. आश्वलायनश्रौतसूत्रस्य प्रथमाध्याये एतादृश उपवेशनप्रकारोऽभिहितः।

गार्हपत्यादुदक् पात्रान्तरे तदीयानङ्गारान् 'सुहुतकृतः स्थ सुहुतं करिष्यथ' इति मन्त्रेण पृथक्कुर्यात्। ततस्तेष्वङ्गारेषु पृथक्कृतेषु अग्निहोत्रार्थं होमद्रव्यं पयः 'अधिश्रितम्' इत्यादियजुषा 'इडायास्पदम्' इति वा ऋचा अधिश्रयेत्। अयमधिश्रयणमन्त्र उभयोरपि सूत्रकारयोः प्रायशः समान एव। दधि चेदग्निहोत्रार्थमुपयुज्यते तन्नाधिश्रयेत्। तदप्यधिश्रयेदिति केषाञ्चिन्मतम्।

आश्वलायनमते काम्याग्निहोत्रस्य यवागुरोदनो दधि सर्पिश्चेति द्रव्याणि भवन्ति। एतानि क्रमेण ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानामाहिताग्नीनां साधनतया ग्राह्याणि।

### हविष्पाकः

ततः समु[1]दन्तस्य द्रव्यस्य होमसाधनत्वमापस्तम्बेन कीर्त्तितम्। उद्गतान्तमेव कृत्वाऽग्निहोत्रद्रव्यस्य प्रतिषेकः कर्त्तव्यः। तत्र तेजःप्रभृतीनि फलान्यभिवाञ्छता यजमानेन प्रतिषेको न कर्त्तव्यः। ईषदधिश्रितं होमद्रव्यं न प्रतिषेक्यम्। ज्वलता तृणेन हविर्द्रव्यस्यावेक्षणं कुर्यात्। ततो दोहनपात्रसंक्षालितं जलं स्रुव आनीय 'हरस्ते मा विनैषम्' इति मन्त्रेण प्रतिषिञ्चेत्, अपां स्तोकेन वा।

आश्वलायनोऽपि आपस्तम्बवदग्निहोत्रद्रव्यस्य ज्वलत्तृणेनावद्योतनं कर्त्तव्यमिति वदति। तन्मते अधिश्रितं यदग्निहोत्रद्रव्यं तदवज्वलयेत्। अधिश्रयरहितमपि दध्यवज्वलयेत्। तत्रोभयत्रापि 'अग्निष्टे तेजो मा हार्षी'रिति मन्त्रः पठनीयः। ततः 'शान्तिरस्यमृतमसी'ति मन्त्रेण दोहनपात्रप्रक्षालितं जलं स्रुव आनीय तदवज्वलितं प्रतिषिञ्चेत्। अत्र प्रतिषेकाभावोऽपि विकल्पेन कीर्त्तितः। विकल्पितयोरनयोः सङ्करो न कर्त्तव्यः। अर्थात् एकः सर्वदा प्रतिषिञ्चेदपरः सर्वदा न प्रतिषिञ्चेदिति व्यवस्थितविकल्पोऽत्राङ्गीकरणीयः।

### पर्यग्निकरणं हविरुन्नयनम्

तदनु पुनरपि हविरवेक्ष्य 'अन्तरितं रक्षः' इति मन्त्रेण त्रिः पर्यग्नि कृत्वा 'घर्मोऽसि' इति वर्त्म कुर्वन् तत् प्रागुदग्वा उद्वासयेत्। तत्र वर्त्म न कुर्यादित्येके वदन्ति। ततो वर्त्मकरणेन प्रागुद्वास्य 'दृंह प्रजां पशून् दृंह' इति

---

१. अन्तेषु समुद्गतः फेनो यस्य न मध्ये तत् समुदन्तम्। तावन्मात्रेण शृतं होतव्यमिति रुद्रदत्तः। भाष्यकारो धूर्त्तस्वामी 'समुदन्तम्' इत्यस्य पात्रस्य मध्ये यदा फेनो नोत्तिष्ठति एवंलक्षणं शृताशृतमित्यर्थं वदति।

त्रिवारमग्निहोत्रद्रव्यं भूमौ प्रतिष्ठाप्य गार्हपत्येऽङ्गारान् पुनः प्रक्षिप्य 'देवस्य त्वा सवितुः प्रसवे' इति स्रुक्स्रुवमादाय 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' इत्याहवनीये गार्हपत्ये वा ते प्रतितप्य 'अरिष्टो यजमानः पत्नी च' इति सम्मृश्य 'हिरण्ययष्टिरस्यमृतपलाशा स्रोतो यज्ञानाम्' इत्यग्निहोत्रहवणीमभिमन्त्र्य 'ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमानम्' इति सायं ब्रूयात्, 'ओमुन्नयामि' इति प्रातः। ततो यजमानः 'हविर्देवानामसि' इत्युपांशूक्त्वा 'ओमुन्नय' इत्युच्चैरनुजानीयात्। स्वयंहोमेऽपि आत्मानमनुजानीयादिति सूत्रकाराभिप्रायः। उन्नीयमाने यजमानाध्वर्यू होमसमाप्तिपर्यन्तं वाग्यमनं कुर्याताम्। होमसमाप्तिं यावद्यजमानः अभिमीलनं कुर्यात्। उन्नयनानन्तरं यजमान उपविशेत्।

अत्र काम्यमप्युन्नयनमापस्तम्बो वदति। यस्य पुत्रस्यर्धिमिच्छेत् यजमानस्तं पुत्रं चित्ते कृत्वा पूर्णं स्रुवमुन्नयेत्। यदि ज्येष्ठो ज्येष्ठ ऋद्धः स्यादिति कामयेत तदा प्रथमादारभ्य क्रमेण स्रुवान् ह्रासयेत्। यदि पुनः कनिष्ठः कनिष्ठ इति तदा प्रथमादारभ्य क्रमाद्वर्धयित्वाऽन्त्यं पूर्णमुन्नयेत्। यदि पुत्राः सर्वे समानवीर्या भवेयुरिति कामयेत तदा सर्वान् समानुन्नयेत्। तत्र कामाभावे यथासम्भवमुन्नयनं कर्त्तव्यम्। समन्त्र[1]काणि चत्वारि उन्नयनानि कृत्वा पञ्चावत्तिनां कृते पञ्चममप्युन्नयनं समन्त्रकं कुर्यात्। 'भूरिडा' 'भुवरिडा' 'सुवरिडा' 'करदिडा' 'पृथगिडा' इति वा प्रतिमन्त्रमुन्नयनं कुर्यात्। आश्वलायनमते तु पञ्चममुन्नयनममन्त्रकं भवतीति विशेषः। अत्राश्वलायनापेक्षया उन्नयनमन्त्रा अपि भिन्ना आपस्तम्बेन कीर्त्तिताः।

तत्रभवानाश्वलायनः पर्यग्निकरणमापस्तम्बवदेव कीर्त्तयति। तन्मते येनोल्मुकेनावज्वलनं कृतं तेन पुनर्ज्वलता 'अन्तरितं रक्षोऽन्तरिता अरातयः' इति सकृन्मन्त्रेण त्रिस्तूष्णीं तत् त्रिः परिहरेत्।

अधिश्रितं हविर्द्रव्यं यदा समुदन्तं[2] भवति तदा कर्षन्निवोदगुद्वास्य 'दिवे त्वा' 'अन्तरिक्षाय त्वा' इति मन्त्राभ्यामाकाशे निधाय 'पृथिव्यै त्वा' इति मन्त्रेण

---

१. 'अग्नये च त्वा पृथिव्यै चोन्नयामि' इति प्रथमम्। 'वायवे च त्वान्तरिक्षाय च' इति द्वितीयम्। 'सूर्याय च त्वा दिवे च' इति तृतीयम्। 'चन्द्रमसे च त्वा नक्षत्रेभ्यश्च' इति चतुर्थम्। 'अद्भ्यस्त्वौषधीभ्यश्च' इति जमदग्नीनां पञ्चमम्।

२. सम्यगुद्गतोऽन्तो यस्य द्रव्यस्य तत् समुदन्तं द्रव्यम्। पच्यमानं पयः स्थाल्या अन्तं परितः यदा आगच्छति तदेत्यर्थः।

तद् भूमौ निदध्यात्। ततः 'सुहुतकृतः स्थ सुहुतमकार्ष्ट' इति यजुर्मन्त्रेण पूर्वमपोहितानङ्गारान् गार्हपत्ये प्रक्षिप्य 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' 'निष्टप्तं रक्षो निष्टप्ता अरातयः' इति मन्त्राभ्यां स्रुक्स्रुवं प्रतितपेत्। ततः स्थाल्या उत्तरतः स्रुचमासाद्य स्रुवहस्तः 'ओमुन्नयानि' इति मन्त्रेणाहिताग्निमतिसर्जयेत्।

ततो हविरुन्नयनमाश्वलायनेन विधीयते। ऋत्विक्कर्तृकहोमे यजमान एतस्मिन् काले आचम्यापरेण वेदिमतिप्रव्रज्य दक्षिणत उपविश्य अतिसर्जनमन्त्रं श्रुत्वा 'ओमुन्नय' इति ब्रूयात्। एवमतिसृष्टोऽध्वर्युः 'भूरिडा' 'भुव इडा' 'स्वरिडा' 'व्रध इडा' इति चतुर्भिर्मन्त्रैः चतुरः स्रुवान् पूरयेत्। इदमुन्नयनं काम्यरूपेणापि सूत्रकारेण विहितम्। यो यजमानः पुत्राणामनुज्येष्ठमिच्छेत् तस्य पूर्वः पूर्वः स्रुवः पूर्णतमो भवेत्। तत्र बहुपुत्रस्य यजमानस्य चतुर्थादुपरि प्रिये पुत्रे सति पञ्चमं स्रुवं तूष्णीमुन्नयेदित्येके मन्यन्ते। अत एव केचित् पञ्चमं स्रुवं तूष्णीं सर्वेषामिच्छन्ति। पञ्चावत्ती चेद्यजमानस्तर्हि तूष्णीं पञ्चममुन्नयेत्।

### हविरासादनम्

तत उन्नयनदेशमागत्य गार्हपत्ये स्वं हस्तं प्रताप्य 'सजूर्देवैः सायम्' इति मन्त्रेण सायं स्रुग्गतं तत् सम्मृशेत्, 'सजूर्देवैः प्रातर्यावभि'रिति प्रातः। तदनु दशहोतृमन्त्रेण तदभिमृश्य प्रादेशमात्रीं पालाशीं समिधमुपरि धारयन् गार्हपत्यसमीपं हरेत्। तत्र 'उर्वन्तरिक्षं वीहि' इति गमनमन्त्रः सूत्रकारेण संकीर्त्तितः। गच्छन् दशहोतारमपि जपेत्। समं प्राणैः कृत्वा हरेत्। ततः 'स्वाहाग्नये वैश्वानराय' इति विहारस्य मध्यदेशे तद्द्रव्यं नियच्छेत्। 'वाताय त्वा' इति मन्त्रेण पुनस्तत् प्राणसममुद्गृह्णीयात्। तदनु 'उपप्रेत'[1] इत्याहवनीयस्य पश्चिमभागे दर्भेषु तत् सादयेत्। अत्रैव अग्न्युद्धरणप्रकारा[2] आपस्तम्बेन प्रदर्शिताः। प्रकारकीर्त्तनस्येदमेव तात्पर्यं सूत्रकारस्य यद् होमाधिकरणभूतोऽयमग्निः कीदृश इति।

### प्रधानहोमः

ततो 'विद्युदसि विद्य मे पाप्मानमृतात् सत्यमुपैमि' इत्यप उपस्पृश्य पालाशीं समिधमग्नावादध्यात्, एकां द्वे तिस्रो वा। तत्र त्रित्वपक्षे मन्त्रभेद आपस्तम्बेन

१. 'उपप्रेत संयतध्वं मान्तर्गात भागिनं भागधेयात् सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्युपप्रत्तमुप भूर्भुवःसुवरायुर्मे यच्छ' इति समग्रो मन्त्रः।

२. इमे प्रकारास्तैत्तिरीयब्राह्मणस्य द्वितीयकाण्डे प्रथमप्रपाठके दशमानुवाके कीर्त्तिताः।

कीर्त्तितः। समिधमाधाय उच्छ्वस्य निःश्वस्य निमील्य वीक्ष्य प्रधानहोमं कुर्यात्। होमानन्तरं यत्कामो यजमानस्तद्ध्यायेत्। हुत्वा आकाशमभिवीक्षेत। तत्र प्रधानहोम आदीप्तायां समिधि कर्त्तव्यः। श्यामभावमापन्नायां वा तस्यां कर्त्तव्यः। गतार्चिषि वा तस्यां कर्त्तव्यः। एवमग्नेः स्वरूपं नित्यं भवति। कामनाभेदेन धूपायत्यां ज्वलत्यामङ्गारेषु वा होमाः सूत्रकारेण कर्त्तव्यतया विहिताः। सायमग्निहोत्रहोमः आहवनीयमभिक्रमणपुरःसरं कर्त्तव्यः, प्रातरव-क्रमणपुरःसरं कर्त्तव्य इति विशेषः। उभयोः कालयोरभिक्रम्याभिक्रम्य वाऽयं होमः कर्त्तव्यः। प्रधानहोमात् पूर्वं महाव्याहृतीनां जपो भवति। तत्र सायंहोमे 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रः, प्रातर्होमे च 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति मन्त्रः पठनीयः। संसृष्टहोमं[1] वा कुर्यात्। तदा 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति सायम्, 'सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहा' इति प्रातः। इयमग्निहोत्रस्य पूर्वाहुतिरापस्तम्बाभिमता दृश्यते।

### लेपकार्यमुत्तराहुतिश्च

ततो होमानन्तरम् 'इषे त्वा' इति मन्त्रेण स्रुङ्मुखात् सायं लेपं गृह्णीयात्, 'ऊर्जे त्वा' इति प्रातः। तं लेपं बर्हिषि निमृज्य 'वर्चो मे यच्छ' इति तत्र स्रुचं सादयित्वा 'अग्ने गृहपते'[2] इति गार्हपत्यं प्रतीक्ष्य व्याहृतिभिस्तूष्णीं वाऽग्नेः पूर्वार्धे समिधि उत्तरामाहुतिं जुहुयात्। अत्र पूर्ववत् समिधां होमो भवति। समिद्धोमाभावमपि केचन वदन्ति। उत्तराहुतौ पूर्वाहुत्यपेक्षया द्रव्यस्याधिक्यं भवेत्। भक्षार्थमपि तदवशेषयेत्। एवमुत्तराहुतिं हुत्वा स्रुचमादायाग्नेरुद्-ग्रहणं यथा स्यात्तथा तं कम्पयेत्। पूर्ववल्लेपमवमृज्य प्राचीनावीती भूत्वा दक्षिणेन वेदिं भूम्यां लेपं निमृज्य 'प्रजां मे यच्छ' इति स्रुचं सादयित्वा अप उपस्पृश्य उपवीती सन् अशब्दं कुर्वन् दन्तान् परित्यज्य शिष्टं लेपं प्राश्नीयात्। तत आच[3]म्य पुनरपि प्राश्याचम्य उदङ्मुखः पर्यावृत्य उदग्गत्वा 'गर्भेभ्यस्त्वा'[4]

१. संसृष्टेन मन्त्रेण संसृष्टाभ्यां देवताभ्यां वा होमः संसृष्टहोमः।

२. 'अग्ने गृहपते मा मा सन्ताप्सीरात्मन्नन्तमधिषि प्रजा ज्योतिरदर्श्येन त्वा चक्षुषा प्रतीक्षे' इति समग्रो मन्त्रः।

३. सूत्रे यत्राचमनं विधीयते तत्र सर्वत्रापां भक्षणमेवाभिप्रेतम्। ततः शौचार्थमाचमनम्। ततः प्राशनम्, पुनः शौचार्थमाचमनम्। अयमेव क्रमः सर्वत्रावगन्तव्यः।

४. 'गर्भेभ्यस्त्वा गर्भान् प्रीणीह्याग्नेयं हविः प्रजननं मे अस्तु। दशवीरं सर्वगणं स्वस्तये।

इत्युदग्दण्डया प्राग्दण्डया वा स्रुचा तदाचामेत्। अस्मिन् मन्त्रे 'आग्नेयं हवि'रित्यत्र प्रातर्होमे 'सौर्यं हवि'रित्यूहः कर्त्तव्यः। तदनन्तरं द्विः स्रुचं निर्लिह्य अद्भिः स्रुचं पूरयित्वा आहवनीयस्य पुरस्तान्नीत्वा आचम्य दर्भैरग्निहोत्रहवणीं प्रक्षालयेत्। अत्र हस्तेन प्रक्षालनं निषिद्धम्। पुनरपि अद्भिः स्रुचं पूरयित्वा हस्तेन स्रुचा वा प्रतिदिशं व्युत्सिच्य तिस्रः स्रुच उत्सिच्य चतुर्थीं पूरयित्वा आहवनीयस्य पश्चात् तदेकदेशं निनीय शेषं पत्न्या अञ्जलौ निनयेत्। यदि आर्तवादिना पत्नी सन्निहिता न भवेत्तदा तज्जलं पत्न्यायतने[1] निनयेत्। अपरमुदकं स्रुच्यानीय उन्नयनदेशे निनीयाहवनीये स्रुचं प्रताप्य हस्तः क्षेप्तव्यः, हस्तं वा प्रताप्य स्रुचि क्षिपेत्। तया हस्तसम्मृष्टया स्रुचोदङ्मुखस्त-मूष्माणं 'सप्तर्षिभ्यस्त्वा सप्तर्षीन् जिन्व' इति सप्तर्षीनुद्दिश्य मुञ्चेत्।

ततोऽग्निहोत्रहवणीं भूमौ निक्षिप्य स्रुवं गृहीत्वा तं पयसा प्रपूर्य तेन गार्हपत्ये चतस्र आहुतीः, दक्षिणाग्नौ च तावतीराहुतीर्जुहुयात्। तत्राग्निर्गृहपतिर्देवता आदितश्चतसृणामाहुतीनाम्। अग्निर्गृहपतिः, रयिपतिः, पुष्टिपतिः, कामः, अन्नाद्यो वा विकल्पेन देवता भवन्ति। तत्र पक्षान्तरे एकैव आहुतिः कर्त्तव्या। समुच्चययुक्ताप्याहुतिर्भवतीत्येके अभिप्रयन्ति। अग्निरदाभ्यः परिषद्यो दाक्षिणाग्निकानां प्रथमाद्वितीयाचतुर्थीनामाहुतीनां देवता। 'अन्नपते अन्नस्य नो देहि' इत्यग्निरन्नपतिदेवताका द्वितीया आहुतिर्नित्या भवति। अथवा यदाहवनीये होमस्तदा प्राशनादिकं कृत्वा सप्तर्षिभ्यो होमः कर्त्तव्यः। एवं क्रियमाणे विशिष्टं किञ्चित् फलं निर्दिष्टमापस्तम्बेन। तथा च गार्हपत्ये चतस्र आहुतयः, दक्षिणाग्नौ चतस्रः, आहवनीये च द्वे इति मिलित्वा दश[2] सम्पद्यन्ते। अनेन यज्ञस्य समृद्धिः प्रतिपादिता भवति। 'दीदिहि दीदिदासि दीदाय' इति सर्वेषामग्नीनामेक एव उपसमिन्धनमन्त्रो बह्वृचब्राह्मणोक्त आपस्तम्बेन

---

आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धेहि। रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहा' इति समग्रो मन्त्रः।

१. पत्न्यायतनं नाम यत्र पत्नी उपविशति तत् स्थानम्। तस्या उपवेशनस्थानं गार्हपत्यस्य पश्चाद्भागः। दर्शपूर्णमासयोः गार्हपत्याग्नावेव पत्नीसंयाजा अनुष्ठीयन्ते। तदनुष्ठानावसरे पत्न्या तत्र भवितव्यम्। अतस्तत् स्थानं गार्हपत्यपश्चाद्भागः। तदेव पत्न्यायतनमित्युच्यते। किञ्च पत्नीसंयाजेषु देवानां पत्न्यो देवता भवन्ति। तासां होमोऽपि गार्हपत्ये विहितः। अतः पत्न्यायतनशब्दो गार्हपत्यपश्चाद्भागवाची।

२. गार्हपत्यदक्षिणाग्न्योरपि चतस्रश्चतस्रो नित्या आहुतयः कर्त्तव्या इति। एतेषा सर्वेषां दशानां होमानां प्रधानत्वं मीमांसकमते, दश सम्पद्यन्ते इति वचनाच्च। भाष्यकारमते तु केवलं प्रथमाहुतेरेव प्राधान्यम्, इतरासां तु अङ्गत्वमेव।

निर्दिष्टः। 'दीदिहि' 'दीदिदासि' 'दीदाय' 'दीद्यासम्' 'दीद्यस्व' इति वा पञ्चभिर्मन्त्रैः प्रतिमन्त्रमेकैकस्याग्नेरिन्धनं कर्त्तव्यम्। येन क्रमेणाग्नय आहितास्तेनैव क्रमेण आहवनीयाद्वा प्रक्रम्यान्तर्वेदि अपो निनीय पूर्ववदग्निपरिषेचनं कर्त्तव्यम्। अत्र धारापरिषेकस्तु निषिद्धः। तदनन्तरमग्निहोत्रस्थाल्याम् 'अपि प्रेरग्ने'[1] इति मन्त्रेण दर्भमङ्क्त्वा तमाहवनीये प्रहरेत्। अत्रैवाग्निहोत्रस्य समाप्तिः। अग्निहोत्रे आस्तीर्णानां बर्हिषामग्नौ प्रहरणं नास्ति। यतश्च यज्ञस्यासंस्थितत्वात्। ततोऽग्निहोत्रस्थालीं प्रक्षाल्य 'अक्षितमसि अक्षित्यै जुहोमि स्वाहा' इत्युन्नयनदेशेऽन्तर्वेदि वा तज्जलं निनयेत्। तदनन्तरं 'वृष्टिरसि'[2] इति मन्त्रेणाचम्य यजमानोऽन्तर्वेदि मार्जनं कुर्यात् 'अन्नादाः स्थान्नादो भूयासं यज्ञः स्थ यज्ञस्वी भूयासं श्रद्धा स्थ श्रद्धिषीय' इति मन्त्रेण। 'आपो ह यत्'[3] इति शिरसि अप आनीय प्रोक्षणं कुर्यात्। एतदन्तमापस्तम्बाभिमतमग्निहोत्राख्यं कर्मोच्यते।

### आश्वलायनप्रयोगः

आश्वलायनस्तु उन्नयनानन्तरमग्निहोत्रस्थालीमभिमृश्य समिधं स्रुचं च गृहीत्वा गार्हपत्यस्योपरि हृत्वा प्राणसम्मितां कृत्वा आहवनीयस्य पश्चात् कुशेष्वासाद्य ज्वाल्य 'रजतां त्वाग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहा' इति मन्त्रेण समिधमादध्यादिति वदति। इमं समिद्धोमं परिसमाप्य 'विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा' इत्यप उपस्पृश्य प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात् व्याहृतिपुरःसरम् 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रेण। अस्याः पूर्वाहुतिरिति संज्ञा। एतामाहुतिं हुत्वा कुशेषु स्रुचं सादयित्वा 'पशून्मे यच्छ' इति मन्त्रेण गार्हपत्यमवेक्षेत। अन्ये तु गार्हपत्यं गत्वा तस्य पश्चात् प्राङ्मुखो भूत्वा तमवेक्षेतेति मन्यन्ते। पूर्वाहुतेरनन्तरं ज्वाल्य उत्तरामाहुतिममन्त्रकां जुहुयात्। पूर्वाहुतेर्भूयसीं पूर्वाहुत्यसंसृष्टां पूर्वाहुतेः प्रागुदग्देशे उत्तरतो वैतामाहुतिं जुहुयात्। अस्यामाहुत्यां हूयमानायां

---

१. 'अपि प्रेरग्ने त्वां तन्वमयाट् द्यावापृथिवी ऊर्जमस्मासु धेहि' इति समग्रो मन्त्रः।

२. 'वृष्टिरसि वृश्च मे पाप्मानमृतात् सत्यमुपागाममप्सु श्रद्धा' इति समग्रो मन्त्रः।

३. 'आपो ह यत्' ब्रह्म प्रथमं सम्बभूव येन धृतो वरुणो येन मित्रः। येनेन्द्रं देवा अभ्यषिञ्चन्त राज्याय तेनाहं मामभिषिञ्चामि वर्चसे' इति समग्रो मन्त्रः। अनेन मन्त्रेण शिरसि अप आनीयते। शिरस्यपामानयनमेव मार्जनम्।

प्रजापतिशब्दं चतुर्थ्यन्तं ध्यायेत्। स्वाहाकारमुपांशूच्चारयेत्। अग्निहोत्रहोमादन्यत्रापि तूष्णींहोमेषु सर्वत्र प्रजापतेर्मनसा ध्यानं कर्त्तव्यमित्याश्वलायन उपदिशति। तत उत्तरस्या आहुतेर्भूयिष्ठं द्रव्यं स्रुच्यवस्थाप्य तदाहवनीयस्योपरि त्रिरनुप्रकम्प्य कुशेषु स्रुचं निधाय पुष्करलेपमवमृज्य हस्तलेपं कुशमूलेषु निमृजेत् 'पशुभ्यस्त्वा' इति मन्त्रेण। तेषां कुशमूलानां दक्षिणत उत्ताना अङ्गुलीः कृत्वा प्राचीनावीती भूत्वा 'स्वधा पितृभ्यः' इति मन्त्रेण तूष्णीं वा अपो निनीय 'वृष्टिरसि वृश्च मे पाप्मानमप्सु अद्दा' इत्यप उपस्पृश्य स्वीयमनन्तरं कर्म कुर्यात्।

अतोऽस्मिन्नग्निहोत्रे आश्वलायनीयं याजमानमुच्यते। आहिताग्निरनुमन्त्रणं कुर्यात्। तत्र यजमानः समिदाधानमन्त्रेण 'तेन ऋषिणे'[1]त्यनेन मन्त्रेण च समिधमाधीयमानामनुमन्त्रयेत। 'ता अस्य सूद दोहसे' इति हूयमानां पूर्वाहुतिमनुमन्त्रयेत। उत्तराहुतिमुत्थायानुमन्त्रयेत 'भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः' इति मन्त्रेण। अथवाहुतिमीक्षमाण एव मन्त्रोक्तानि फलान्याकाङ्क्षेत। इमौ द्वावप्यनुमन्त्रणमन्त्रौ आपस्तम्बेन नाभिहितौ। 'उप त्वाग्ने दिवेदिवे'[2] इति तिसृभिराग्नेयीभिश्च प्रत्यहमुत्तरामेवाहुतिमनुमन्त्रयेत। 'अग्न आयूंषि पवसे'[3] इति तिसृभिः संवत्सरे संवत्सरे एतामनुमन्त्रयेतेत्यपि विशेष आश्वलायनेन प्रदर्शितः।

एवं होमप्रकारमभिधाय आपस्तम्बवदेव स्वयंहोममृत्विक्कर्तृकं होममन्तेवासिकर्तृकं वा होममाश्वलायनो विदधाति। यवाग्वा पयसा वा स्वयं पर्वणि पौर्णमास्याममावास्यायां वा सायं प्रातरग्निहोत्रं जुहुयात्। पर्वणोऽन्यत्र काले ऋत्विजां मध्ये कश्चिदेको जुहुयात्। शिष्यो वाऽन्यस्मिन् कालेऽग्निहोत्रं जुहुयात्। तदनन्तरं हविःशेषभक्षणमनेन सूत्रकारेण कीर्त्तितम्। पूर्ववदुदकोपस्पर्शनं कृत्वा उदगावृत्य हुतशेषं भक्षयेत्। होमे त्वपरयोरग्न्योर्हुत्वा भक्षयेत्। तत्र 'आयुषे त्वा प्राश्नामि' इति प्रथमं भक्षयेत्। 'अन्नाद्याय त्वा प्राश्नामि' इत्युत्तरं भक्षयेत्। आपस्तम्बवदनेनापि गार्हपत्ये दक्षिणाग्नौ च समिदाधानमुपदिष्टम्। तत्र तूष्णीं समिधमाधाय 'अग्नये गृहपतये स्वाहा' इति गार्हपत्ये पूर्वामाहुतिं जुहुयात्। उत्तराहुतिं तूष्णीं भूयसीं जुहुयात्।

---

१. 'तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद् ध्रुवासीत्' इति समग्रो मन्त्रः।

२. ऋ० सं० १।१।७-९

३. ऋ० सं ९।६६।१९-२१

एवं तूष्णीं समिधमाधाय 'अग्नये संवेशपतये स्वाहा' 'अग्नयेऽन्नाद्यायान्नपतये स्वाहा' इति वा दक्षिणाग्नौ पूर्वाहुतिं जुहुयात्। उत्तरा तु नित्या वेदितव्या। अन्ये सर्वेऽपि धर्मा निनयनकुशप्रक्षालनदिग्घोमसप्तर्षिहोमादय आपस्तम्ब-वदनेनापि सूत्रकारेण कीर्त्तिताः। ततो गार्हपत्ये आहवनीये वा स्रुचं प्रताप्य वेदिमध्ये निधानं परिचारकाय वा प्रदानमापस्तम्बवदेव कीर्त्तितम्। तदनन्तरं समिधो गृहीत्वाऽग्रेणाहवनीयं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्ङ्स्वस्तिष्ठ-न्नेकैकस्मिन्नग्नौ तिस्रस्तिस्रः समिध आदध्यात्। सर्वत्रापि प्रथमां[1] समिधं समन्त्रकां, द्वितीयतृतीये तु तूष्णीमादध्यात्। अत्राहवनीये प्रथमसमिदाधाने 'दीदिहि' इति मन्त्रः, गार्हपत्ये 'दीदाय' इति, दक्षिणाग्नौ 'दीदिदाय' इति। एतेषु मन्त्रेषु केचित् स्वाहाकारमन्ते कुर्वन्ति। 'ऋतसत्याभ्याम्' इति पूर्वं यत् पर्युक्षणमुक्तं तदत्रापि कर्त्तव्यम्। ताभ्यां पर्युक्षणाभ्यां परिसमूहने व्याख्याते। पर्युक्षणाभ्यां पूर्वं परिसमूहने तु कर्त्तव्ये भवतः। इमे एव होमधर्मा 'एवं प्रात'[2]-रिति सूत्रेण प्रातर्होमेऽपि अतिदिष्टाः। तत्र पुनरयं विशेषः सूत्रकारेण प्रदर्शितः। आदित्योदयसमीपे, अपहृते तमसि, उदिते वा आदित्ये प्रातर्होमः कर्त्तव्यः। प्रातः पर्युक्षणे 'सत्यऋताभ्यां त्वा पर्युक्षामि' इति मन्त्रः पठनीयः, 'ओमुन्नेष्यामि' इत्यतिसर्जनमन्त्रः। 'हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहा' इति समिदाधानमन्त्रः। 'भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति मन्त्रेण प्रधानाहुतिहोमः कर्त्तव्यः। एवमाश्वलायनोक्तोऽग्निहोत्रहोमः समाप्तो भवति।

### काम्याग्निहोत्रम्

नित्यमग्निहोत्रहोमप्रकारमभिधाय सूत्रकार आपस्तम्बस्तत्तत्कामनापूर्वकं क्रियमाणस्य होमस्य प्रकारविशेषं बोधयति। यदि यजमानः पशूनिच्छेत् तदा सोऽग्निहोत्रस्थाल्यां प्रथमां गां दुग्ध्वा द्वितीयाञ्च गोदोहनपात्रे, द्वे अपि पयसी मेलयित्वा तेन जुहुयात्। अत्र पूर्वदुग्धपयसा सहैवाग्निहोत्र-स्थालीमधिश्रित्यानन्तरं दोहनपात्रस्थस्य पयसस्तत्रानयनं कुर्यात्। नित्याग्निहोत्रे तु दोहने पात्रभेदश्रवणेऽपि सहाधिश्रयणमेव लभ्यते इति विशेषः। अनेनैव

१. यत्र संस्कारकर्मणि त्रिरावृत्तिर्विधीयते तत्र 'सकृन्मन्त्रेण द्विस्तूष्णीम्' (आ० श्रौ० १।३।२९) इति परिभाषा प्रवर्त्तते। प्रधानकर्मणि सा न प्रवर्त्तत इति ज्ञात्वा सूत्रकारेण 'प्रथमां समन्त्राम्' (आ० श्रौ० २।४।१८) इति सूत्रितम्।

२. आ० श्रौ० २।४।२३

दोहनप्रकारेण सायंप्रातर्होमं कुर्याद्यजमानः यश्च रुद्रद्वारा पशुपीडनमनुभवेदिति सूत्रकाराभिप्रायः। कृतेऽप्यग्निहोत्रे पुनश्चेद्रुद्रः पशून् हन्यात् तदा 'सजूर्जातवेदः'[1] इति मन्त्रेण सायं प्रातराज्येन हविषा जुहुयात्। यद्यनेनाप्यनुष्ठानेन रुद्रो न विरमेत् तदा 'अग्ने दुःशीततनो जुषस्व स्वाहा' इति मन्त्रेण द्वादशाहपर्यन्तमाज्येन जुहुयात्। तत ऊर्ध्वं न प्रतीक्षेत।

पयसा नित्यहोमेऽपि पशुकामो यजमानः पयसैवाग्निहोत्रं जुहुयादित्यापस्तम्बो वदति। एवं कामनाभेदेन द्रव्यभेदोऽपि आश्वलायनवदनेनापि कीर्त्तितः। यवागूरोदनो दधि तण्डुलो मांसं सोम आज्यमिति द्रव्याणि ग्रामान्नाद्येन्द्रियौजोयशोब्रह्मवर्चसतेजस्कामानां यथासंख्येन भवन्ति। तत्र यवाग्वा होमे यवागूं श्रपयंस्तूष्णीमुदकेन प्रतिषिच्य श्रपयेदिति विशेषः सूत्रकारेणाभिहितः। ततः शृतां तां पुनः 'हरस्ते मा विनैषम्' इति यजुर्मन्त्रेण प्रतिषिञ्चेत्। एवं मांसेन यदा होमस्तदापि श्रपणं प्रतिषेकश्च एवमेव कर्त्तव्यम्। आज्येन होमावसरे तु तस्य प्रतिषेको निषिद्धः। तदा तत्स्थाने द्वे दर्भाग्रे एकं वा पूर्वोक्तेनैव मन्त्रेण प्रत्यस्येत्। दध्ना होमकाले तस्याधिश्रयणं परिषेकं च न कुर्यादित्यापस्तम्बाशयः। आश्वलायनोऽपि दध्नोऽधिश्रयणाभावमुपदिशति। मतान्तरत्वेन पुनरधिश्रयणं कर्त्तव्यमित्यधिकं किञ्चिद्वदतीति विशेषः। अत्रेदमभिसंहितं सूत्रकारस्य—यद्यपि अधिश्रयणप्रतिषेधादेवाप्रतिषेकः सिद्धस्तथापि पुनस्तत्प्रतिषेधादन्येषां पाकधर्माणां ज्वलत्तृणावद्योतनावेक्षणादीनामनिवृत्तिरिति गम्यते। भारद्वाजोऽपि[2] पूर्वोक्तमापस्तम्बमतमङ्गीकरोति। न केवलं दध्नस्तण्डुलोदनसोमानामपि अधिश्रयणप्रतिषेको सूत्रकारमते निषिद्धौ। यस्य तेजस्कामादेरप्रतिषेक उक्तः स एतेषामप्रतिषेक्याणामन्यतमेनैव द्रव्येण जुहुयात्। एवं काम्यपक्षानभिप्राय सूत्रकारेण ब्राह्मणभोजनं, नित्यमग्न्युपस्थानं, सत्यवादित्वं, यजमानस्यैव विकल्पतया पर्वहोमः, अन्तेवासिकर्त्तृकहोम इत्यादयः साधारणाः केचन धर्मविशेषाः प्रतिपादिताः।

## अग्न्युपस्थानम्

एवमग्निहोत्रप्रकरणं परिसमाप्यापस्तम्बः अग्न्युपस्थानप्रकारविशेषान् सविस्तरमुपदिशति। इमे प्रकारविशेषा आश्वलायनेन न प्रतिपादिताः।

१. 'सजूर्जातवेदो दिवि आपृथिव्या अस्य हविषो घृतस्य वीहि स्वाहा' इति समग्रो मन्त्रः।

२. भा० श्रौ० ६।१४।१७

## प्रवत्स्यद्धोमः

अग्न्युपस्थानात् परमापस्तम्बेन प्रवसतो यजमानस्याग्न्युपस्थानविधिर्वर्णितः। आश्वलायनोऽपि प्रवसद्याजमानविधिमिमं समुपवर्णयति। तत्र प्रवत्स्यन्नाहिताग्निरग्निहोत्रवत्तूष्णीमग्नीन् विहृत्य तान् प्रज्वाल्य विहाराद्बहिः कर्माङ्गमाचमनं कृत्वा तीर्थेन विहारं प्रविश्य तं तमग्निमतिक्रम्य तस्य तस्य पश्चात् प्राङ्मुखः स्थित्वा तं तमग्निमुपतिष्ठेत। आपस्तम्बोऽपि विहरणं कृत्वा ज्वलतामग्नीनामुपस्थानमुपदिशति। तत्रोभावपि सूत्रकारौ आहवनीयगार्हपत्यदक्षिणाग्नीनां क्रमेणोपस्थानं विधत्तः। उपस्थानमन्त्रा[1] उभयोरपि भिन्ना आम्नाताः। तदनन्तरमाश्वलायनो दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन् 'इमान् मे मित्रावरुणौ'[2] इति मन्त्रेण गार्हपत्याहवनीयावीक्षेतेति वदति। आपस्तम्बस्तु उभयोर्मध्ये तिष्ठतो यजमानस्य जपमभिप्रैति[3]। ततो जपानन्तरमग्न्याधेयवत् विराट्क्रमैरग्नीनुपस्थाय भक्षयित्वा प्रवासं गमिष्यन्तं यजमानम् 'अग्नीन् समाधेहि' इति ब्रूयात्। ततो ज्वलतस्त्रीनप्यग्नीन् पूर्वविलक्षणैः मन्त्रैरुपतिष्ठेत[4]। आश्वलायनस्तु यथेतं प्रत्येत्य विहारस्य प्रदक्षिणं कुर्वन् केवलमाहवनीयाग्निमेवोपतिष्ठेतेति वदति। तत्राश्वलायनोक्त आहवनीयो[5]पस्थानमन्त्र आपस्तम्बोक्तेन द्वितीयाहवनीयमन्त्रेणाक्षरशः संवदति। ततो वाग्यतो भूत्वा 'मा प्रगाम'[6] इति सूक्तं जपन् विहारान्निर्गच्छेत्। सूक्तं समाप्य दूरादग्निभ्यो गत्वा वाग्विसर्जनं

---

१. 'पशून्नः शंस्य पाहि तान्नो गोपायास्माकं पुनरागमात्' 'प्रजां नो नर्य पाहि तां नो गोपायास्माकं पुनरागमात्' 'अन्नं नो बुध्न्य पाहि तन्नो गोपायास्माकं पुनरागमात्' इति त्रय आपस्तम्बोक्ता उपस्थानमन्त्राः। आश्वलायनीया उपस्थानमन्त्राः पुनः 'शंस्य पशून् मे पाहि' 'नर्य प्रजां मे पाहि' 'अथर्वपितुं मे पाहि' इति त्रयः।

२. 'इमान्मे मित्रावरुणौ गृहान् गोपायतं युवम्। अविनष्टानविहृतान् पूषैनानभिरक्षत्वस्माकं पुनरायनात्' इति समग्रो मन्त्रः।

३. 'इमान्नो मित्रावरुणा गृहान् गोपायतं युवम्। अविनष्टानविहृतान् पूषैनानभिरक्षत्वस्माकं पुनरागमात्' इत्यापस्तम्बोक्तो जपमन्त्रः।

४. 'प्रजां मे नर्य पाहि तां मे गोपायास्माकं पुनरागमात्' 'अन्नं मे बुध्न्य पाहि तन्मे गोपायास्माकं पुनरागमात्' 'पशून् मे शंस्य पाहि तन्मे गोपायास्माकं पुनरागमात्' इत्यापस्तम्बोक्ता उपस्थानमन्त्राः।

५. 'मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्ने। तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्ने (तै० सं १।५।१०।१) इत्याश्वलायनीय आहवनीयोपस्थानमन्त्रः। शाखान्तरीयत्वात् मन्त्रोऽयं समग्रः सूत्रकारेणोपन्यस्तः। आपस्तम्बस्तु स्वीयशाखात्वेन मन्त्रमिमं प्रतीकग्रहणेन निर्दिशति।

६. ऋ० सं० १०।५।७

कुर्यात्। यावद्गतेऽग्न्यगारच्छदिर्न दृश्यते तावदत्राराच्छन्देनोच्यते। अस्मात् प्राग् वाग्यत एव सर्वं कुर्यात्। अग्निहोत्रकाले प्रवसन् यजमानो विहारदेशमभिवीक्षमाणः सर्वानग्न्युपस्थानाधिकारविहितान् मन्त्रान् जपेत्। अत्र कात्यायन[1]भारद्वाजौ[2] आपस्तम्बमतमेवानुसरतः। नात्राश्वलायनेन किमप्यभिहितम्। अग्न्युपस्थानमकृत्वा यदि यजमानः प्रवासं कुर्यात्तदा 'इहैव सन्तत्र'[3] इति पन्थानं प्राप्य ब्रूयात्। एवमग्निमुपस्थायैव प्रवसितव्यं नान्यथेति सूत्रकाराभिप्रायः। यदि कदाचिदुपस्थानमकृत्वैव गन्तव्यं तदा 'इहैव सन्तत्र सन्तम्' इत्यादिमन्त्रेणाग्निमुपतिष्ठेत। मन्त्रोऽयमुभयोरपि सूत्रकारयोः समान एव। ततः प्रवासं कृत्वा स्वग्रामं प्रत्यागत्य 'अपि पन्थामगन्महि' इति ब्रूयात्। प्रत्यागमनकाले समित्पाणिरग्नीन् ज्वलतः श्रुत्वा आहवनीयसमीपमागत्याहवनीयमीक्षेत 'विश्वदानीम्'[4] इति द्वाभ्यां मन्त्राभ्याम्। आपस्तम्बस्तु आभ्यामग्निसमीपगमनमुपदिशति। ततः 'अग्नीन् समाधेहि' इति सम्प्रेषितो ज्वलतोऽग्नीनुपतिष्ठेत। आश्वलायनोऽपि पूर्वमानीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधाय 'मम नाम तव च'[5] इति मन्त्रेण आहवनीयोपस्थानं वदति। आपस्तम्बस्तु 'मम नाम तव च जातवेदः' इति चतसृभिराहवनीयमुपतिष्ठेतेत्यभिप्रैति। तत उपनिहिता याः समिधस्ता अग्निष्वभ्यादध्यात्। उभाभ्यामपि सूत्रकाराभ्यां भिन्नाः समिदाधानमन्त्राः कीर्त्तिताः। ततः पूर्ववत् 'इमान् मे मित्रावरुणा'[6] इति मन्त्रेण गार्हपत्याहवनीयावीक्षेत। आपस्तम्बोऽपि इममेव मन्त्रं गार्हपत्याहवनीययोर्मध्ये तिष्ठन् जपेदिति वदति। अनन्तरं यथेतं प्रत्येत्य सर्वस्य विहारस्य परिसमूहनं कृत्वा 'भूर्भुवःस्व'रिति वाग्विसर्जनं कुर्यात्।

---

१. का० श्रौ० ४।१२।१५ २. भा० श्रौ० ६।४।६-७

३. 'इहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि। तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठत' इति समग्रो मन्त्रः।

४. 'विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम' 'नमस्ते अस्तु मीढुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः सं मा रय्या सृज' इत्याश्वलायनोक्तं मन्त्रद्वयम्। आपस्तम्बोऽपि अविकलमेतन्मन्त्रद्वयं प्रदर्शयति।

५. 'मम नाम तव च जातवेदो वाससी इव विवसानौ चराव:। ते बिभृवो दक्षसे जीवसे च यथायथं वौ तन्वौ जातवेदः' इत्याश्वलायनीयो मन्त्रः।

६. पूर्वोक्तस्यैव मन्त्रस्य 'गोपायतम्' 'अभिरक्षतु' इति पदद्वयस्थाने यथाक्रमम् 'अजुगुपतम्' 'अभ्यन्तराक्षीत्' इत्यूहः। आश्वलायनस्तु ऊहितमेव मन्त्रं पठति।

ततो नैमित्तिकमग्निहोत्रमाश्वलायनो विदधाति। यदि दशरात्रादूर्ध्वं प्रवसेत्तदा जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा 'मनो ज्योतिर्जुषताम्'[1] इत्यृचा जुहुयात्। अयमेवाज्यहोमः अग्निहोत्रविच्छेदेऽपि कर्त्तव्यतया विहितः। एतामाहुतिं हुत्वा प्रतिहोमं च कुर्यादित्येके वदन्ति। तत्र प्रतिहोमो नाम यावन्तः काला होमेन विच्छिन्नास्तावतामेकैकं कालं प्रति एकैको होमः कर्त्तव्य इति। ततः प्रवासात् प्रत्यागत्य 'गृहा मा बिभीत' इति मन्त्रेण गृहानीक्षेत। 'गृहानहं सुमनसः प्रपद्ये' इति गृहं प्रपद्य 'शिवं शग्मं शंयोः शंयो'रिति त्रिर्जपेत्। प्रवासादागताय यजमानाय तस्मिन्नहनि अप्रियं किमपि न ज्ञापयेयुः। प्रवासादागतश्चाहरहरग्निहोत्रहोमे 'अभयं वः' इति मन्त्रेणोपस्थानं कुर्यात्। एतावता आश्वलायनेन प्रवासोपस्थानविधिः समापितः।

आपस्तम्बस्तु यथाक्रमं त्रयाणामग्नीनामुपस्थानमभिधाय नित्याग्न्युपस्थानवत् समिधां दिशां चोपस्थानं विधत्ते। नवमीं रात्रिमतीत्य यदि कश्चन प्रवासं कुर्यात्तदा 'मित्रो जनान् यातयति प्रजानन्'[2] इति मैत्र्योपस्थाय 'मनो ज्योतिर्जुषताम्' इत्याज्याहुतिं जुहुयात्। समिदाधानदिगुपस्थानयोर्मध्ये केचन मनस्वत्याहुतिमिच्छन्ति। अत्र प्रवत्स्यदागतोपस्थाने उभे अप्यधिकृत्य वाजसनेयिनः 'अभयंकराऽभयं मे कुरु' इत्येकमेव मन्त्रं समामनन्ति। बह्वृचास्तु द्वयोः प्रवत्स्यदागतोपस्थानयोः 'नमो वोऽस्तु प्रवत्स्यामि' 'नमो वोऽस्तु प्रावात्स्यम्' इति मन्त्रद्वयं पठन्ति। प्रवासादागत्य 'गृहा मा बिभेत' इत्यादिमन्त्रेण गृहसमीपमागच्छेत्। ततः 'क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयो' रिति गृहं प्रविश्य निषीदन् वा यजमानः 'ऊर्जं बिभ्रद्'[3] इति मन्त्रं जपेत्।

एवं प्रवासोपस्थानविधिमुक्त्वा आपस्तम्बः सपत्नीकस्य यजमानस्य प्रवासोपस्थानविधिं कीर्त्तितवान्। आश्वलायनेन तु इमं विषयमधिकृत्य न किमप्यभिहितम्।

---

१. 'मनो ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु। या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहा' इति समग्रो मन्त्रः। आपस्तम्बस्तु मन्त्रमिमं प्रतीकग्रहणेन निर्दिशति।

२. 'मित्रो जनान् यातयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टिरनिमिषाऽभिचष्टे सत्याय हव्यं घृतवद्विधेम' ( तै० सं० ३।४।११।५ ) इति समग्रो मन्त्रः।

३. 'ऊर्जं बिभ्रद्वः सुमनाः सुवर्चा गृहानागा मनसा मोदमानः। इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामि' इति समग्रो मन्त्रः।

## दर्शपूर्णमासप्रकरणम्

'यज्ञं व्याख्यास्यामः'[1] इत्यापस्तम्बयज्ञपरिभाषायां यज्ञस्य व्याख्या प्रतिज्ञाता । स चायं यज्ञ एकविंशतिसंस्थ इत्यभिधीयते । तत्र सप्त पाक[2]यज्ञसस्थाः, सप्त हवि[3]र्यज्ञसंस्थाः, सप्त सोम[4]संस्थाश्चेति सर्वै-र्मिलित्वा एकविंशतिसंस्थो यज्ञः सम्पद्यते । सप्तानां हविर्यज्ञानां मध्ये दर्श-पूर्णमासयागोऽन्यतमः । तत्र प्रायशः सर्वेषु श्रौतसूत्रेषु दर्शपूर्णमासयोरादौ व्याख्यानं विहितम् । एतस्य कारणं किमित्यपेक्षायामापस्तम्बेन एवमुच्यते —शाखादौ दर्शपूर्णमासमन्त्राणां पूर्वमाम्नानादाधानेष्टीनामपि दर्शपूर्णमास-प्रकृतिकत्वादाधानादपि पूर्वं दर्शपूर्णमासव्याख्यानं कर्तव्यमिति । आश्व-लायनेनापि मतमिदमङ्गीकृतम् । तत्रोक्तम्—'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राम्नातत्वात्'[5] इति । अत्रेदमभिसंहितम्— प्रकृतित्वात् निरपेक्षत्वाच्च पूर्वकाण्डस्यादौ कर्मान्तरं विहाय दर्शपूर्ण-मासयोरेव प्राथम्येन प्रतिपादनं क्रियते । प्रकर्षेण सर्वेषामङ्गानामुपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षं सूचयति। विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते अङ्गान्तराणि च प्रकृतेरति-दिश्यन्ते । अतोऽतिदेशस्य प्रकर्षाभावः स्फुटः । तत्रोपदेशातिदेशयोर्लक्षणे शास्त्रकारैरेवं निर्दिष्टे-'उपदेशो हि निर्देशः कुर्यादित्थमिदं त्विति । तद्वत् कुर्यादित्ययं यः सोऽतिदेशोऽवगम्यताम्' इति । प्रकृतिस्त्रिविधा—अग्निहोत्र-मिष्टिः सोमश्चेति । त्रिष्वप्येतेषु अन्यनिरपेक्षतयाऽखिलं स्वाङ्गजातमुपदिष्टम्।

---

1 आप० श्रौ० २४।१।१

2 औपासनहोमो वैश्वदेवं पार्वणमष्टका मासिश्राद्धं सर्पबलिरीशानबलिश्चेति सप्त पाकयज्ञसस्थाः।

3 अग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी पिण्ड-पितृयज्ञादयो दर्विहोमाः सप्त हविर्यज्ञसंस्थाः।

4 अग्निष्टोमोऽत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः ।

5 आ० श्रौ० १।१।३

तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु इष्टिषु दर्शपूर्णमासेष्टिसापेक्षत्वान्न तस्य प्रथमभावित्वं युक्तम् । इष्टेस्तु सोमयाग-निरपेक्षतया हेतुना सोमात् प्राक्कालीनत्वमुपपन्नम् । यद्यप्यग्निहोत्रस्य स्वरूपेऽङ्गेषु वा नास्त्यन्यापेक्षा तथाप्यग्निसिद्ध्यपेक्षत्वादाहवनीयाद्यग्नीनां च पावमानेष्टिसाध्यत्वात्, पावमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाऽग्निहोत्रस्यापि दर्शपूर्णमासापेक्षास्तीति प्राग्भावित्वं न युज्यते । दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेन्न, यतो नाधानमात्रेणाग्नयः सिध्यन्ति किन्तु पावमानेष्टिभिरपि । ताश्चेष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव दर्शपूर्णमासावपेक्षन्ते । अतो निरपेक्षत्वात् दर्शपूर्णमासेष्टिरेवादौ वक्तव्येति निश्चयः ।

पुनरपि संशयोऽयं पदं कुरुते—ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासे-ष्टिर्नाम्नातेति कथं तस्याः प्रथमभावित्वं युक्तमिति चेदुच्यते—मन्त्राणा-मर्थज्ञान हि यज्ञे परं प्राथम्यमावहति । तत्तु यज्ञानुष्ठानं विना कदापि न सम्भवति । तत्र यज्ञानुष्ठाने यजुर्वेद एव परमं साधनम् । अतः कर्म-काण्डविषये यजुर्वेदस्यैव प्राधान्याद् यजुर्वेदमपेक्ष्यैव दर्शपूर्णमासयोरादित्व-मुक्तमिति न किञ्चित् हीयते । कमपि आनुपूर्वीविशेषमवलम्ब्य यज्ञकर्मणां स्वरूपं यजुर्वेदे समाम्नातम् । तत्र तत्र विशेषापेक्षायामपेक्षितायां तत्सिद्ध्यर्थं याज्यापुरोऽनुवाक्यादय ऋग्वेदे समाम्नायन्ते, स्तोत्रादीनि तु सामवेदे । तथा सति भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ इति व्यपदेष्टुं शक्यम् । तस्मात् यज्ञकर्मसु यजुर्वेदस्यैव प्राधान्यं निराबाधं तत्र च दर्शपूर्णमासेष्टिरादौ आम्नातेति तद्व्याख्यानमादौ युज्यते ।

अथेदानीं दर्शपूर्णमासयोः स्वरूपं तदनुष्ठानप्रकारश्च प्रतिपाद्यते । दर्शपूर्णमासयोराध्वर्यवं हौत्रं ब्राह्मं याजमानं च कर्तव्यानि भवन्ति । तत्रभवानापस्तम्बाचार्यो हौत्रं परित्यज्य अन्यानि सर्वाणि कीर्त्तयति । होतुः कर्म हौत्रं तच्चाश्वलायनसूत्रैकसमधिगम्यम् । अतोऽस्मिन् प्रकरणे आपस्तम्बसूत्रानुसारमध्वर्योः कर्माणि निरूपयन् मध्ये यत्र हौत्रं याजमानं ब्राह्मं वा आपतेत् तत्र तान्यपि समावेशयामि येन च क्रमबद्धः प्रयोगो दर्शपूर्णमासयोः प्रदर्शितः स्यात् ।

## अन्वाधानम्

दर्शपूर्णमासयोः प्रथममङ्गमन्वा[1]धानम् । तत्र यजमानोऽन्वाधानदिने प्रातरग्निहोत्रं हुत्वा कृतक्षौरो विहाराद्बहिरीशान्यां दिशि प्राङ्मुखो भूत्वा यज्ञोप[2]वीती द्विराचम्य गार्हपत्यस्य पश्चाद्दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः सपत्नीकः प्राणानायम्य देशकालावनुकीर्त्य 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शेन यक्ष्ये' (पूर्णमासेन यक्ष्ये—इति पौर्णमास्याम्) इति सङ्कल्प्य 'विद्युदसि विद्य मे पाप्मानमृतात् सत्यमुपैमि' इत्यप उपस्पृश्य[3] 'अस्यां दर्शेष्टौ अध्वर्युं त्वामहं वृणे' (पुर्णमासेष्ट्याम्—इति पूर्णिमायाम्) इत्यध्वर्युं वृत्वा एवमेव ब्रह्माणं च वृणुयात् । अध्वर्युरपि 'वृतोऽस्मि कर्म करिष्यामि' इति ब्रूयात् । अन्येऽपि एवमेव वृता ब्रूयुः । ततो गार्हपत्यादाहवनीयार्थं ज्वलन्तमग्निमुद्धृत्य दक्षिणाग्निं यथायोनि प्रणीयाहवनीयं च प्रणीय विहारस्योत्तरत उपविश्य 'देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम्' इति जपित्वा 'ममाग्ने वर्चो विहवे[4]ष्वस्तु' इत्याहवनीयं महद्भिर्यज्ञियकाष्ठैः प्रज्वालयेत् । तदनन्तरं यजमानः 'अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति

---

1 अन्वाधान नाम अग्निषु काष्ठाना यज्ञियाना समन्त्रकमाधानम् । अत्राधानं नाम निक्षेपणमात्रमग्नेः प्रदीपनार्थम् ।

2 यज्ञोपवीतस्य पुरुषार्थे सत्यपि दर्शपूर्णमासाङ्गतया प्राप्तं कर्मार्थं यज्ञोपवीतित्वमवश्यं सम्पादनीयम् । यत्रोभावपि बाहू न्यग्भूतौ सन्तौ ब्रह्मसूत्रेण वीर्येते संवृतावाच्छादितौ क्रियेते तन्निवीतम् । तच्च मनुष्याणां कार्येषु प्रशस्तम् । प्राचीनो दक्षिणो बाहुराधीयतेऽधस्तात् क्रियते यत्र तत् प्राचीनावीतम् । तच्च पितृकर्मणि प्रशस्तम् । दक्षिणं बाहुमूर्ध्वं धृत्वा सव्ये बाहौ लम्बमाने सति यद्वेष्टनं तद्यज्ञोपवीतम् (तै० स० २।५।११) इति सायणाचार्याः ।

3 इदमपामुपस्पर्शनं न केवलं दर्शपूर्णमासयोः किन्तु सर्वेषु इष्टिपशुसोमेषु दर्विहोमेष्वपि प्राप्नोति । रुद्रदत्तस्तु सूत्रे यज्ञशब्दग्रहणात् अतद्रूपेषु दर्विहोमेषु न तद् भवतीत्याह ।

4 'ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम । मह्यं नमन्ता प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम' (तै० सं० ४।७।१।४) इति समग्रो मन्त्रः ।

सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वो[1] यज्ञाय रमतां देवताभ्यः । वसून् रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ।। इमामूर्जं[2] पञ्चदशी ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह तानावहतु' [3]'आमावास्यं हविरिदमेषां मयि' इत्याहवनीयेऽन्वाधीयमाने जपित्वा 'अन्तराग्नी पशवो देवतसदमागमन् । तान् पूर्वः परिगृह्णामि स्व आयतने मनीषया' इति गार्हपत्याहवनीयावन्तरा तिष्ठन् जपेत् ।

ततोऽध्वर्युः 'मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः । ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्' इति मन्त्रेण गार्हपत्यं महद्भिर्यज्ञियैः काष्ठैः प्रज्वालयेत् । यजमानस्तु 'इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ।। इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । तान् पूर्वः परिगृह्णामि स्व आयतने मनीषया' इति गार्हपत्यमन्वाधीयमानमुपतिष्ठेत । तदनन्तरमध्वर्युः 'मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः । दैव्या होतारा वनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः' इति दक्षिणाग्निं महद्भिर्यज्ञियैः काष्ठैः प्रज्वालयेत् ।

अत्र विहव्यानु[4]वाकस्य दशर्चस्य तिसृभिस्तिसृभिस्त्रीनेतानग्नीन् सकृत् सकृदुपसमिन्ध्यात् । अस्मिन् पक्षे दशमी जपेत् । तथा आहवनीये वा

---

1 अग्निं गृह्णामीत्यस्या ऋचः सद्यस्कालाया लोपः कार्यः, श्वो यज्ञाय रमतामिति मन्त्रस्य श्वःशब्दघटितत्वात् । प्रकृतावूहाभावात् 'अद्य यज्ञाय रमताम्' इत्यूहेन पाठः प्रतिषिद्धः । विकृतौ सद्यस्कालायाम् 'अद्य यज्ञाय' इत्यूहः कार्यः ।

2 इमामूर्जमित्यस्या अप्यृचः सद्यस्कालाया पौर्णमास्याममावास्यायां सन्नयतोऽप्यसन्नयतोऽप्येवमेव लोपः कर्तव्यः पूर्वोक्तन्यायात् । पञ्चदशीमिति मन्त्रोक्तो लिङ्गविरोधोऽपि स्पष्ट एव । यदा त्वल्पाऽपि पञ्चदशी स्यात्तदा न लोपः । विकृतीष्टिषु तु इमामूर्जं प्रथमामित्याद्यूहः कर्तव्यः ।

3 'पौर्णमासं हविरिदमेषां मयि' इति पौर्णमास्याम् । विकृतिषु नामवतीष्विष्टिषु तेन तेन नाम्ना उपलक्षणं कर्तव्यम् । यथा चैत्रं हविः, आग्रयणीयं हविरित्यादि ।

4 'ममाग्ने वर्चः' (तै० सं० ४।७।२४) इत्यनुवाकस्य समग्रस्य विहव्य इति संज्ञा । तत्र प्रथममन्त्रे विहवपदश्रवणात् ।

सर्वाः समिध आदध्यात् । भूर्भुवःसुवरित्येकैकया व्याहृत्या एकैकस्याग्नेरन्वाधानमेके समामनन्ति । 'भूर्भुवःसुवरिति स्वयमातृण्णा[1]मुपदधाति' इति समुच्चयेन विहितानामपि व्याहृतीनां सूत्रकारेण पृथगेव विनियोगप्रदर्शनात् पृथग् विनियोगो बोद्धव्यः । अत्र तु गार्हपत्यादिव्याहृतिपक्षे वाजसनेयिनां समस्तोपदिष्टानां विभागकरणात् प्राक्संस्थावचनाच्च[2] तिसृभिस्तिसृभिरेकैकस्यान्वाधानमुपदेशमते वेदितव्यम् ।

ततो यजमानः'अयं पितृणामग्निरवाड्ढव्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदि'ति दक्षिणाग्निमन्वाधीयमानमुपस्थाय 'इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमि' इत्यन्वाहितेषु जपेत् । अत्र गार्हपत्याहवनीयदक्षिणाग्नीनां समन्त्रकमन्वाधानं विहितम् । सभ्यावसथ्ययोरपि आध्वर्यवेऽनुक्तमप्यस्ति तूष्णीकमन्वाधानमित्यवगन्तव्यम् । तत्र याजमानप्रकरणे 'अजस्रं त्वा'[3] 'अन्नमावसथीयम्'[4] इति तयोरुपस्थानमन्त्रौ भवतः ।

## शाखाहरणम्

ततः सन्नयतः शाखाहरणं विहितम् । सा पलाशशाखा शमीशाखा वा बहुपर्णयुक्ता बहुशाखायुक्ता च भवेत् । सा अग्रभागे अशुष्का छिद्ररहिता च सान्नाय्यार्थे[5]मुपयुज्यते । एवंलक्षणा शाखा वृक्षस्य प्राच्या-

---

1 आप० श्रौ० १६।२३।१

2 'महाव्याहृतिभिर्वा प्राक्संस्थम्' (का० श्रौ० २।१।६)

3 'अजस्रं त्वा सभापाला विजयभागं समिन्धताम् । अग्ने दीदाय मे सभ्य विजित्यै शरदः शतम्' इति सभ्याग्नेरुपस्थानमन्त्रः ।

4 'अन्नमावसथीयमभिहराणि शरदः शतम् । आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छतु' इत्यावसथ्यस्योपस्थानमन्त्रः ।

5 'शाखां छिनत्ति, शाखामाहरति, मूलतः परिवास्य उपवेषं करोति, उपवेषेण कपालान्युपदधाति, शाखया वत्सानपाकरोति' इति वाक्यानि श्रूयन्ते । तत्र शाखाछेदनस्य प्रयोजकं किमिति पूर्वमीमांसायां चतुर्थद्वितीये तृतीयाधिकरणे विचारितम् । इमानि छेदनादीनि कर्माणि सान्नाय्यार्थं क्रियन्ते । 'येन यत सिध्यति तत् तस्य प्रयोजकम्' इति न्यायेन शाखाछेदनेन सान्नाय्ययागोपकारो

मुदीच्यां प्रागुदीच्यां वा दिशि प्रवृत्ता भवति । अध्वर्युः 'इषे त्वोर्जे त्वा'[1] इति मन्त्रेण पलाशशाखां शमीशाखां वा छित्वाऽप[2] उपस्पृश्य 'इमां प्राचीमुदीचीमिषमूर्जमभिसंस्कृताम् । बहुपर्णामशुष्काग्रां हरामि पशुपामहम्' इत्यनेन तां शाखां हरेत् । अत्र केचन 'इषे त्वा' इत्यनेनाच्छेदनम, 'ऊर्जे त्वा' इत्यनेन तस्याः सन्नमनं स्पर्शनं वाऽभिप्रयन्ति ।

ततो यजमानः 'पयस्वतीरोषधयः'[3]इत्यप आचम्य पुनः शुद्ध्यर्थमाचम्य, अपरेणाहवनीयं दक्षिणातिक्रम्य दक्षिणेनाहवनीयमुदङ्मुखोऽवस्थाय व्रतमुपैष्यन् समुद्रं मनसा ध्यात्वा अग्न्यादीन् देवानभिसन्धाय 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्, वायो व्रतपते व्रतं चरिष्यामि तन्मे राध्यताम्, आदित्य व्रतपते व्रतं चरिष्यामि तन्मे राध्यताम्, व्रतानां व्रतपते व्रत चरिष्यामि तन्मे राध्यताम्'[4] इति जपित्वा 'सम्राडसि'[5]

---

जायते, उपवेषसिद्धिरपि भवति । अतश्छेदनादिकं प्रति सान्नाय्ययागः उपवेषश्चेति उभयं प्रयोजकमिति पूर्वपक्षः। सिद्धान्तस्तु उपवेषार्थत्वं छेदनस्य न स्वीक्रियते, उपवेषस्यार्थतः सिद्धत्वात् । 'मूलतः शाखाम्' इत्यत्र मूलापादानकं परिवासनं गम्यते। तच्च परिवासनमग्रस्य उपकारकाय न तु मूलस्य। अग्रभागस्तु शाखा सा च वत्सापाकरणे विनियुज्यते, उपवेषस्तु कपालोपधान । तप्ताना कपालानां हस्तेनोपधान दुःशकमिति उपवेषः काष्ठविशेषस्तत्र विनियुक्तः । अतस्तदर्थत्वं शाखाया न सम्भवति किन्तु सान्नाय्ययागार्थत्वमेव इति ।

1 असोमयाजिनोऽमावास्यायां पौर्णमास्यां च शाखाछेदनादिशाखोपगूहनान्तं कर्म न कर्तव्य सान्नाय्याभावात् । एव सोमयाजिनः पौर्णमास्या शाखाछेदनादिशाखोपगूहनान्त कर्म नास्ति, पौर्णमास्यां सान्नाय्याभावात् ।

2 छेदनादावपामुपस्पर्शनमापस्तम्बयज्ञपरिभाषाया विहितम्—'रौद्रराक्षसनैर्ऋत पैतृकछेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत्, (आप० श्रौ० २४।२।९)

3 'पयस्वतीरोषधयः पयस्वद्वीरुधां पय.। अपां पयसो यत् पयस्तेन मामिन्द्र संसृज' (तै० सं० १।५।१०।४) इति समग्रो मन्त्रः।

4 'अग्ने व्रतपते' इति प्रथममन्त्रस्य ब्राह्मणकर्तृकत्वमापस्तम्बो विदधाति । 'वायो व्रतपते' इत्यादयस्त्रयो मन्त्रा राजन्यवैश्ययोरेकैकस्य भवन्ति । सर्वान् वैतान् मन्त्रान् ब्राह्मणो ब्रूयात् इत्यपि विकल्पस्तेनाभिहितः।

5 'सम्राडसि व्रतपा असि व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासम्' इति समग्रो मन्त्रः।

इत्यादित्यमुपतिष्ठेत। यदि अस्तमिते सूर्ये व्रतग्रहणं कुर्यात्तदा आहवनीयमुपतिष्ठन्नादित्यमभिसन्धाय एतं यजुर्मन्त्रं जपेदिति विशेषः। भार[1]द्वाजोऽपि इमं विशेषं प्रतिपादयति।

## वत्सापाकरणम्

शाखाहरणानन्तरं तया वत्सापाकरणं कुर्यात्। एतदर्थमध्वर्युः 'वायवः स्थोपायव स्थ' इति मन्त्रेण तया शाखया षडवराध्यान्[2] वत्सानपाकृत्य 'देवो वः सविता प्रार्पयतु'[3] इति गोचराय गा. प्रस्थाप्य 'शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय[4] शरदो दुहानाः। रुद्रस्य हेतिः परि वो वृणक्तु' इति प्रस्थितास्ता अनुमन्त्र्य 'ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः' इति यजमानगृहानभिपर्यावर्तेत।

## शाखोपगूहनम्

ततः 'यजमानस्य पशून् पाहि' इति मन्त्रेण अग्निष्ठे[5] शकटे अग्न्यगारे वा पुरस्तात्प्रतीचीं[6] पश्चात्प्राची[7] वा शाखामुपगूह्य 'देवस्य त्वा सवितुः

---

1 भा० श्रौ० ४।३।८

2 षडवराध्यानित्यत्र अर्धशब्दो भागवचन.। अवरार्धसम्बन्धिनो वत्सानवराध्यानिति। 'यावतीनामेका कुम्भी दुग्ध सम्भरेत् तावती वराध्या मात्रा स्यात्' (भा० श्रौ० १।२।१३) इति भारद्वाजसूत्रमत्राभिसंहितम्।

3 'देवो व. सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया इन्द्राय देवभागमूजस्वती. पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माऽघशंसः' (तै० सं० १, १, १, १) इति समग्रो मन्त्रः। अस्मिन् मन्त्रे 'इन्द्राय' इति स्थाने 'महेन्द्राय' इति केचन पठन्ति।

4 महेन्द्रयाजिनोऽपि प्रकृतमन्त्रे 'शतं महेन्द्राय' इत्यूहेन पाठो न भवति। 'शतं शरदो दुहानाः' इति शतसंवत्सरसम्बन्धिदोहनाभिधानेन वर्तमानप्रयोगनिर्देशादसमवेताभिधायित्वादनूहः। रुद्रदत्तस्तु मतमिदं नाङ्गीकरोति।

5 अग्निसमीपस्थमनः शकटमग्निष्ठम्।

6 अनसोऽग्न्यगारस्य वा प्रत्यगग्राम्।

7 अनसः पुरस्तादग्न्यगारस्य वा परतः प्रागग्राम्।

प्रसवे' इति गार्हपत्यस्योत्तरस्यां निहितमसिदमश्वपर्शुं मनडुत्पर्शुं वाऽऽदाय 'यज्ञस्य घोषदसी'ति गार्हपत्यमभिमन्त्र्य 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' इत्याहवनीये गार्हपत्ये वाऽ[1]सिदं प्रतितपेत् ।

### बर्हिराहरणम्

प्रतितपनानन्तरमसिदं कमण्डलुं चादायाध्वर्युः 'प्रेयमगात्'[2] इति मन्त्रं समग्रमुक्त्वा मध्ये विरम्याऽनन्तरम् 'उर्वन्तरिक्षमन्विहि' इति मन्त्रं पठित्वा प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दिशो दर्भमयं बर्हिराहरेत् ।

तत्र बर्हिराहरणप्रकारःआपस्तम्बेन इत्थं प्रदर्शितः—'देवानां परिषुतमसि वर्षवृद्धमसि'[3] इति यावदलं बर्हिः परिगृह्य 'विष्णोः स्तूपोऽसि' इति लाव्यत्वेनाभिप्रेतानां तेषां मध्ये एकं स्तम्बमुत्सृज्य 'अतिसृष्टो गवां भाग' इत्येकां द्वे तिस्रो वा ना[4]डीरुत्सृज्याप उपस्पृश्य 'इदं देवानाम्' इति परिगृहीतानभिमृश्य 'इदं पशूनाम्' इत्यतिसृष्टानभिमृश्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभे' इति

---

1 अश्वपर्शोरनडुत्पर्शोर्वा प्रतितपनं निषिद्धम्, 'न पर्शुम्' (आप०श्रौ० १।३।४) इति सूत्रात् । असिदं दात्रम् । पर्शुः पार्श्वास्थि ।

2 'प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे' (तै०सं० १।१।२।१) इति समग्रो मन्त्रः । अस्मिन् मन्त्रे 'मनुना कृता स्वधया वितष्टा' इत्यंशे स्त्रीलिङ्गनिर्देशोऽस्ति । अस्य स्त्रीलिङ्गसहितस्य मन्त्रस्य पर्शौ प्रवृत्तिः समवेता भवति । असिदे तु विलिङ्गत्वात् मन्त्रस्य प्रवृत्तिर्न भवति । अत एवासिदस्य कृते मन्त्रोऽयं न प्रवर्त्तते इति केचन वदन्ति । इद मतं मीमांसाविरुद्धम् । पूर्वमीमासायां नवमाध्यायस्य तृतीयपादे पाशाधिकरणे गुणानुरोधेन प्रधानस्यानुनयनं न भवतीति निश्चितम् । लिङ्गन्तु प्रातिपदिकापेक्षया गुणभूतम् । अतस्तस्यानादरः कर्त्तव्यः । गुणभूतं लिङ्गमादाय मन्त्रस्य पर्शुमात्रे न सङ्कोचो भवितुमर्हति । अतो यथा पर्शो अन्नमयत्वं तथाऽसिदस्यापि इति तत्रापि मन्त्रप्रवृत्तिः । इदमेव मतं मीमांसकसम्मतम् ।

3 एकस्तम्बपरिषवणे उत्सर्गः अभिमर्शनं च न भवति ।

4 नाडीः शलाकाः ।

विशाखेषु[1] दर्भान् संस्पृश्य 'देवबर्हिर्मा त्वाऽन्वङ मा तिर्यक्' इति सव्यहस्तेन गृहीत्वा 'पर्व ते राध्यासम्' इत्यसिदं पर्वण्यधिनिधाय 'आच्छेत्ता ते मारिषम्' इति सन्नखं मुष्टिं लुत्वाऽप उपस्पृश्य 'पृथिव्याः सम्पृचः पाहि' इत्यनधो[2] निदध्यात् ।

अत्र योऽयं प्रथमलूनो मुष्टिः, स प्रस्तर इत्यापस्तम्बो वदति । अयुग्मसंख्याकान् मुष्टीन् छिन्द्यात् । तथा निधनान्यपि[3] अयुञ्जि भवन्ति । तेषां मुष्टीनां निधनानाञ्च प्रस्तरेण सहायुग्मत्वमेकेऽभिप्रयन्ति । प्रस्तरे अयुगर्थत्वं प्रति तु याथाकाम्यं सूत्रकाराभिमतम् । 'देवस्य त्वा' इत्यादि 'पृथिव्याः सम्पृचः पाहि' इत्यन्तं सर्वं त्रिरावर्तयेत् । अत्र वाजसनेयिनः प्रस्तरस्य समन्त्रकं लवनमितरस्य च तत्तूष्णीमामनन्ति।

एवमावर्तनेनैकं निधनं भवति । एवमेव त्रीणि निधनानि लुत्वा 'देवबर्हिः शतवल्शं विरोह' इत्यालवानभिमृश्य[4] 'सहस्रवल्शा वि वयं रुहेम' इत्यात्मानं प्रत्यभिमृश्य 'अदित्यै रास्नासि' इति त्रिधातु[5] पञ्चधातु वा शुल्बं कृत्वा 'अयुपिता योनिः' इति प्रतिसन्दध्यात् । एवं शुल्बं कृत्वा 'अदित्यै रास्नासि' इत्युदगग्रं तं वितत्य 'सुसम्भृता त्वा सम्भरामि' इति तस्मिन्निधनानि सम्भृत्य प्रतिनिधनं मन्त्रमावर्त्य 'अलुभिता योनिः' इत्युत्तमे निधने प्रस्तरमत्याधाय 'इन्द्राण्यै सन्नहनम्' इति सन्नह्य 'पूषा ते ग्रन्थिं ग्रथ्नातु' इति ग्रन्थिं कृत्वा 'स ते मास्थात्' इति पुरस्तात्प्रत्यञ्चं पश्चात्प्राञ्चं वा ग्रन्थिमुपगूह्य 'आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे' इति बर्हिरालभ्य 'इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे' इत्युदादाय 'बृहस्पतेर्मूर्ध्ना

---

1 विशाखाः प्रकाण्डादूर्ध्वभागाः । यत. शलाकाः पृथग्भवन्ति तेषु आलभते इत्यर्थः ।

2 अधो भुवि, नाधोऽनधः, उपरिष्टान्निदधाति न भूमौ इत्यर्थः ।

3 निधनानि मुष्टीना राशय इत्यर्थः ।

4 येषु काण्डेषु अलूना दर्भास्ते आलवा इत्युच्यन्ते ।

5 धातुः सन्धिः । शुल्बमेकसरा रज्जुः । 'अदित्यै रास्नासि' इति रज्ज्ववयवाभिधानान्मन्त्रावृत्तिः । प्रतिनिधानव्यवायाच्च ।

हरामि' इति शिरसि अधिनिधाय 'प्रेयमगात्' 'उर्वन्तरिक्षमन्विहि'[1] इति प्रत्यागम्य 'अदित्यास्त्वोपस्थे सादयामि' इत्यन्तर्वेदि परिधिदेशेऽनधः सादयित्वा 'बर्हिरसि देवङ्गमम्' इत्यासन्नमभिमन्त्र्य 'देवङ्गममसि' इति यथोपसादनकाले प्राचीनमुपसादयितुं योग्यं भवेत्तथाऽनधो निधाय तूष्णी दर्भदेशं गत्वा 'या जाता ओषधयो देवेभ्यस्त्रियुग पुरा। तासां पर्वं राध्यासं परिस्तरमाहरन्' इति परिस्तरणमुष्टिमाहृत्य पर्वण्यसिदमधिनिधाय[2] 'अपां मेध्यं यज्ञियं सदेवं शिवमस्तु मे। आच्छेत्ता[3] वो मा रिष जीवानि शरदः शतम्' इति छित्वाऽप उपस्पृश्य 'अपरिमिताना परिमिता. सन्नह्ये[4] सुकृताय कम्। एनो मा नि गा कतमच्च नाहं पुनरुत्थाय बहुला भवन्तु' इति सन्नहनं कुर्यात्।

इध्मकरणम्

ततः खदिरवृक्षीयाणि पलाशवृक्षीयाणि वा एकविंशतिसंख्यकानि इध्मकाष्ठानि कुर्यात्। तेषु त्रयः परिधयः कर्तव्याः। आर्द्राः शुष्का वा त्वग्युक्ता इमे परिधयो भवेयुः। तेषां द्वे आघारसमिधौ, एका अनूयाजार्था, पञ्चदश सामिधेन्यर्थमिति सर्वाणि मिलित्वा एकविंशतिसंख्यकानि भवन्ति।

इध्माहरणम्

इध्मकरणानन्तरं तूष्णीं परिभोजनीयार्थान् दर्भानुलपराज्यर्थांश्च छित्वाऽप उपस्पृश्य सन्नह्य आहृत्य निधाय त्रिधातु[5] पञ्चधातु वा तूष्णी शुल्बं कृत्वा 'अदित्यै रास्नासि' इत्युदगग्रं वितत्य खादिरं पालाशं वैकविंशतिदारुमिध्मं तूष्णी छित्वाऽप उपस्पृश्य 'यत् कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन्। ततस्त्वामेकविंशतिधा सम्भरामि सुसम्भृता।

---

1 पूर्वं बर्हिराहरणार्थं गमनाङ्गत्वेन यौ मन्त्रौ विहितौ तावेव मन्त्रौ प्रत्यागमनस्यापि अङ्गभूतौ। प्रत्यागमनेऽपि तावेव मन्त्रौ पठेदिति।

2 असिदाधिनिधानं 'राध्यासमि'ति पदोच्चारणानन्तरमेव कार्यम्। तल्लिङ्गाभिधाने क्रियानुष्ठानमिति हेतुः सर्वत्रात्रोह्यः।

3 'आच्छेत्ता' इति पदोच्चारणानुपदमेव आच्छेदनं कर्त्तव्यम्।

4 'सन्नह्य' इति पदोच्चारणानन्तरमेव सन्नहनं कार्यम्।

5 दर्भत्रयं दर्भपञ्चकं वा रज्जुरूपेण सम्पाद्येत्यर्थः।

त्रीन् परिधीस्तिस्रः समिधो यज्ञायुरनुसञ्चरान् । उपवेषं मेक्षणं धृष्टिं सम्भरामि सुसम्भृता' इति शुल्बेन इध्मं सम्भृत्य 'कृष्णोऽस्याखरेष्ठो देव पुरश्चर सध्यासं त्वा' इति सन्नह्य पुरस्तात्प्रत्यञ्चं पश्चात्प्राञ्चं वा ग्रन्थिमुपगूह्यानधो निधाय इध्मप्रव्रश्चनानि[1] च पूर्वं बर्हिःस्थापिते देशे निदध्यात् ।

## वेदकरणम्

ततोऽध्वर्युः 'त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेपि विद्वास्त्वया होता सन्तनोत्यर्धमासान्' इति दर्भैः वेदं कुर्यात् । इदं वेदपरिमाणं कामनाभेदेन भिन्नं भवतीत्यापस्तम्बेनाभिहितम् । तत्र वत्सजानुतुल्य. पशुकामस्य वेदो भवति । धान्यावपनार्थं तृणपुञ्जसन्निवेशविशेषोऽन्नाद्यकामस्य[2] वेदो भवति । त्रिवृच्छिरस[3] ब्रह्मवर्चसकामस्य वेदं कुर्यात् । एवं वेदं सम्पाद्य शुल्बात् प्रादेशे परिवास्याप उपस्पृश्य वेदपरिवासनानि निदध्यात्[4] ।

## उपवेषकरणम्

वेदं कृत्वाऽन्तर्वेदि शाखायाः पर्णानि कानिचनाग्रभागेऽवशेष्यान्यानि प्रशात्य मूलतः शाखां परिवास्य 'उपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः शिवः शग्मो भवासि नः' इत्युपवेषं कृत्वा 'तृतीयस्यै दिवो गायत्रिया सोम आभृतः । सोमपीथाय सन्नयितुं वकलमन्तरमाददे' इति परिवासनशकलमादाय प्रज्ञातं तं निधाय त्रिवृद्दर्भमयं पवित्रं[5] कृत्वा 'वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्' इति शाखाया मूले दर्भाणां मूलानि, शाखाया अग्रे दर्भाणामग्राणि विना ग्रन्थिं लङ्घयेत् ।

---

1 येभ्यः पलाशादिकाष्ठेभ्यः इध्मकाष्ठानि छिन्नानि अग्रतस्तेषामधस्तना भागा इध्मप्रव्रश्चनानीत्युच्यन्ते ।

2 अन्नाद्यं भोज्यं भोजनशक्तिर्वा ।

3 त्रिवृच्छिरास्त्रिगुणशिराः ।

4 सोमयाजिनोऽसोमयाजिनश्च पौर्णमास्या वेदपरिवासननिधानानन्तरं यस्य कस्यचिद्यज्ञियकाष्ठस्य मन्त्रेणोपवेषः कर्तव्यो भवति ।

5 'इयान् प्रादेशसम्मितः' इति मन्त्रलिङ्गात् पवित्रं प्रादेशपरिमितं कर्तव्यम् ।

ततो यजमानः 'त्रिवृत् पलाशे[1] दर्भ इयान् प्रादेशसम्मितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे । इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ सञ्चरतां पवित्रे हव्यशोधने' इति शाखापवित्रयोः संयोगं क्रियमाणेऽनुमन्त्रयेत ।

तदनन्तरमृत्विजः अग्न्यगारस्य सम्मार्जनं कुर्युः । अग्न्यायतनानि यजमानः पत्नी च अलङ्कुर्वीताम् । नवे सान्नाय्यकुम्भ्यौ यावच्छर्करं गोमयेनानुलिप्ते भवतः ।

## अमावास्यायां सायंकृत्यम्

### सान्नाय्यारम्भः

अथ सान्नाय्यमुच्यते । अमावास्यायां रात्रौ स्वयं यजमानो यवाग्वा[2] पयसा वाऽग्निहोत्रं जुहुयात् । अग्निहोत्रोच्छेषणमातञ्चनार्थं निदध्यात् । अस्यां रात्रौ अस्य कुमारा अपि पयस एकदेशं न लभन्ते । सायमग्निहोत्रे हुते सति सायंदोहं दोहयेत् । आहवनीयं[3] परिस्तीर्याध्वर्युः सान्नाय्यपात्राणि प्रक्षाल्य आहवनीयादुत्तरतो दर्भान् संस्तीर्य कुम्भी शाखापवित्रम्[4], अभिधानीं[5] निदाने[6] दारुपात्रं दोहनमयस्पात्रं, दारुपात्रं वा

---

1 'त्रिवृत् पलाशे' इति पलाशे त्रिवृत्त्वमुच्यते । तत् पलाशशाखायामेव, न तु शमीशाखायाम् । अतः शमीशाखायां मन्त्रनिवृत्तिः ।

2 सन्नयतो यजमानस्य तु यवाग्वैव होमो न पयसा । तेन व्यवस्थितविकल्पोऽयं सिध्यति ।

3 'अग्नीन् परिस्तृणात्यग्निमग्नी वा' (आप० श्रौ० १।१४।१) इति सूत्रे अग्निमित्येकवचनेन आहवनीय एवाग्निरभिप्रेतः । अग्नी इति द्विवचनेन पूर्वापरयोराहवनीयगार्हपत्ययोरुपस्तरणमभिमतम् । अग्नीन् इति बहुवचनं त्रयाणामप्यग्नीनां परिस्तरणं भवतीति ज्ञापयति । अत्र बहुवचनमिदं कपिञ्जलाधिकरणन्यायेन त्रित्व एव पर्यवस्यति इत्युपदेशमते वेदितव्यम् ।

4 शाखया युक्तं पवित्रं शाखापवित्रमित्युच्यते । तच्च दुग्धशोधनार्थमुपयुज्यते ।

5 वत्सबन्धनार्था रज्जुरभिधानी । अभिधीयते बध्यते अनयेत्यभिधानी ।

6 दोहनकाले गोः पादबन्धनार्था रज्जुःनिदानम् ।

पिधानार्थम्, अग्निहोत्रहवणीमुपवेषम्, पर्णवल्कं च तृणं चेति युग्मशः पात्राणि अधोमुखानि प्रयुज्य पृथुत्वेन समौ अप्रच्छिन्नाग्रौ प्रादेशमात्रे पवित्रे कृत्वा 'पवित्रे स्थो वैष्णवी वायुर्वा मनसा पुनातु' इति तृणं काष्ठं वा दर्भयोर्दात्रस्य च मध्ये कृत्वा तेन सह छित्वा[1] 'विष्णोर्मनसा पूते स्थः' इत्यद्भिरनुमृज्य तत्पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीः 'देवो वः सवितोत्पुनातु' इति प्रथममुत्पूय 'अच्छिद्रेण पवित्रेण' इति द्वितीयमुत्पूय 'वसोः सूर्यस्य रश्मिभिः' इति तृतीयमुत्पूय 'आपो देवीरग्रे पुवः' इत्यभिमन्त्र्य[2] उत्तानानि पात्राणि पर्यावर्त्य 'शुन्धध्व दैव्याय कर्मणे देवयज्यायै' इति सपवित्रेण पाणिना सर्वाभिरद्भिस्त्रिः प्रोक्ष्य सकृन्मन्त्रेण द्विस्तूष्णीम्, प्रज्ञाते पवित्रे निदध्यात्। ततो यजमानः 'आपो देवीः शुद्धाः स्थेमा पात्राणि शुन्धत। उपातङ्क्‍याय देवानां पर्णवल्कमुत शुन्धत। देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः। गां दोहपवित्रे रज्जुं सर्वा पात्राणि शुन्धत' इति प्रोक्ष्यमाणानि तान्यभिमन्त्र्य 'एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः। बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गावः' इति गा आयतीः प्रतीक्षेत। तदनन्तरमध्वर्युः 'निष्टप्तं रक्षो निष्टप्तोऽघशंसः' इति गार्हपत्ये सान्नाय्य-पात्राणि प्रतितप्य 'धृष्टिरसि ब्रह्म यच्छ' इत्युपवेषमादाय 'निरूढं जन्यं भयं निरूढाः सेना अभीत्वरीः' इति गार्हपत्यादुदीचोऽङ्गारान् निरूह्य 'मातरिश्वनो घर्मोऽसि' इति तेषु कुम्भीमधिश्रित्य 'भृगूणामङ्गिरसां तपसा तप्यस्व' इति प्रदक्षिणमङ्गारैः पर्यूह्य 'वसूनां पवित्रमसि'[3] इति तस्यां कुम्भ्यां प्रागग्रं शाखापवित्रमत्याधाय कुम्भीमन्वारभ्य वाचं नियम्य पवित्रं वा धारयन् वर्तेत। ततो दोग्धा 'अदित्यै रास्नासि' इत्यभिधानी गृह्णीयात्।

---

1 नखेन छेदनं तु प्रतिषिद्धम्, 'न नखेन' (आप०श्रौ०१।११।७) इति सूत्रकरणात्।

2 'आपो देवीरग्रे पुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ' (तै० सं० १।१।४।१) इति समग्रो मन्त्रः।

3 'वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्' (तै० सं० १।१।३।१) इति समग्रो मन्त्रः।

तदनु यजमानः 'त्रयस्त्रिंशोऽसि तन्तूनां पवित्रेण सहाऽऽगहि। शिवेयं रज्जुरभिधान्यघ्नियामुपसेवताम्' इत्यादीयमानां रज्जुमभिमन्त्रयेत। ततो दोग्धा 'पूषाऽसि' इति वत्सं बध्नीयात्। ततोऽध्वर्युः 'उपसृष्टां मे प्रब्रूतात्' इति दोग्धारं प्रति सम्प्रैषं दद्यात्। दोग्धा च 'उपसृजामि' इत्यध्वर्युमामन्त्र्य 'अयक्ष्मा वः प्रजया ससृजामि रायस्पोषेण बहुला भवन्ती.' इत्यर्धर्चेन वत्समुपसृजेत्। ततो यजमानः 'अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः। ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुप वः सदेयम्' इत्युपसृष्टामनुमन्त्रयेत। तदनु अध्वर्युः 'गां चोपसृष्टां विहारं चान्तरेण मा सञ्चारिष्ट' इति यजमानं प्रति सम्प्रैषं कुर्यात्। यद्युपसृष्टा गा विहारं चान्तरा कश्चित् गच्छेत्तदा यजमानः प्रायश्चित्तार्थं 'सान्नाय्य मा विलोपि' इति मन्त्रं पठेत्। ततो दोग्धा 'उपसीदामि' इति यजमानमामन्त्र्य 'अयक्ष्मा व. प्रजया संसृजामि' इत्यादिमन्त्रेणोपविश्य[1] दारुपात्रे दुह्यात्। अत्र शूद्रस्य[2] दोहनादोहनविकल्पः सूत्रकारेण प्रदर्शितः। यदा शूद्रो दुह्यात् तदा अदारुपात्र एव दुह्यादिति विशेषः। ततो यजमानः 'द्यौश्चेमं यज्ञं पृथिवो च सन्दुहाताम्। धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधातु' इति दुह्यमानां गामनुमन्त्र्य 'उत्स दुहन्ति कलश चतुर्बिलमिडां देवी मधुमती सुर्वविदम्। तदिन्द्राग्नी जिन्वतं सूनृतावत्तद्यजमानममृतत्वे दधातु' इति धाराघोषं चानुमन्त्रयेत। तदनु दोग्धा दुग्धं पयोऽध्वर्यवे आहरेत्। तं दोग्धारमध्वर्युः पृच्छेत्- 'कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियम्' इति। स च दोग्धा 'गङ्गाम्' इति गां नाम्ना निर्दिश्य 'यस्यां देवानां मनुष्याणां पयो हितम्' इति प्रत्याह। ततोऽध्वर्युः 'सा विश्वायुः' इति निर्दिष्टां गामनुमन्त्र्य 'देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवा' इति कुम्भ्यां तिरः पवित्रमासिच्य 'हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्' इति विप्रुषोऽनुमन्त्रयेत। अनेनैव प्रकारेण द्वितीयां तृतीयाञ्च गां दुह्यात्। तत्र द्वितीयाया गोरनुमन्त्रणावसरे 'सा विश्वव्यचा'

---

1 एकेन निदानेन गो· पादौ बद्ध्वा, अन्येन निदानेन गोः पूर्वपादसमीपे वत्सं बध्नीयात्। एव सर्वदोहनेऽनुसन्धातव्यम्।

2 कात्यायनस्तु शूद्रस्य दोहन पर्युदस्यति (का० श्रौ० ४।२।२२)।

इति विलक्षणमन्त्रः पठनीयः । एवं तृतीयाया अपि अभिमन्त्रणकाले 'सा विश्वकर्मा' इति मन्त्रः पठनीयः । अन्यत् सर्वं पूर्वेण समानम् ।

एवं तिस्रो गा दोहयित्वा यजमानः 'बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पताम्' इति त्रिवारं दोग्धारं प्रातः सम्प्रैषमुक्त्वा वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरां दोहयित्वा दोहनेऽप आनीय 'संपृच्यध्वमृतावरीः'[1] इति कुम्भ्यां संक्षालनमानीयाविष्यन्दयन्[2] सुशृतं कृत्वा 'दृंह गा दृंह गोपतिं मा वो यज्ञपती रिषत्' इति वर्त्म कुर्वन् प्रागुद्वास्य उदक्प्राक् उदग्वा 'सोमेन त्वाऽऽतनच्मीन्द्राय[3]दधि' इति दध्ना शीतबुध्नं[4] पय आतच्य 'यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्ततिमनुसन्तनोमि' इत्यग्निहोत्रोच्छेषणमन्ववधाय 'अयं पयः सोमं कृत्वा स्वां योनिमपि गच्छतु । पर्णवल्कः पवित्रं सौम्यः सोमाद्धि निर्मितः' इति परिवासनशकलमन्ववदध्यात् । अत्र प्रथमातञ्चनद्रव्यस्य दध्नो विकल्पान् सूत्रकार आचष्टे—व्रीह्यादयः, पूतीका नाम लताविशेषाः, बदरीफलानि, पलाशशकलानि चेति । द्वितीयातञ्चनद्रव्यस्य उच्छेषणस्याभावे तण्डुलैरातञ्चनं सूत्रकारसम्मतम् । तण्डुलाभावे व्रीह्यादिभिरोषधीभिरातञ्चनं कुर्यात् । ततः 'आपो हविःषु जागृत यथा देवेषु जाग्रथ । एवमस्मिन् यज्ञे यजमानाय जागृत' इत्ययस्पात्रे दारुपात्रे वाऽप आनीय 'अदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम् । अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते' इति तेनापिदध्यात् । यजमानश्च 'अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम् । तिरः पवित्रमति नीता आपो धारय मातिगुः' इति मन्त्रं जपेत् । यदि अध्वर्युः मृन्मयेन[5] पात्रेणापिदध्यात्तदा तृणं काष्ठं

---

1 'सपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये' (तै० स० १।१।३।२) इति समग्रो मन्त्रः ।

2 कुम्भीगत पयः तापकाले तापाधिक्येन बहिरागत्य यथा न पतेत् तथाकरणमविष्यन्दनम् । तथा कुर्वन् ।

3 'महेन्द्राय दधि' इति महेन्द्रयाजिनः । 'महेन्द्राय इति वा यदि महेन्द्रयाजी भवति' इति भारद्वाजः (भा० श्रौ० १।१३।१५) ।

4 शीतमनुष्णं कुम्भीपृष्ठं यस्य तच्छीतबुध्नम् ।

5 भा० श्रौ० १।१५।१ ।

वाऽपिधाने क्षिप्त्वा 'विष्णो हव्य रक्षस्व' इति कुम्भीमनधो निधाय 'इमौ पर्णं च दर्भं च देवानां हव्यशोधनौ । प्रातर्वेषाय गोपाय विष्णो हव्यं हि रक्षसि' इति प्रज्ञातं शाखापवित्रं निधाय 'वायवः स्थोपायवः स्थ' इति तयैव शाखया दर्भैर्वा षट्कृत्वः प्रातर्दोहाय वत्सान् मातृभ्यः सकाशात् पृथक्कुर्यात् ।

ततः कपालानि उपधाय सायंदोहवत् प्रातर्दोह दोहयेत् । अस्मिन् प्रातर्दोहे आतञ्चनापिधाने निधानं च निवर्त्तते । दधिपयसोर्मिलितयोः सान्नाय्यमिति संज्ञा याज्ञिकानाम् । तत्र सोमयाजिनः सान्नाय्येऽधिकारोऽस्तीत्येकम् । असोमयाजिनोऽपि सान्नाय्येऽधिकारोऽस्तीत्यपरम् । ततः सूत्रकारः सान्नाय्यदेवताव्यवस्थां ब्राह्मणोक्तां प्रदर्शयति । गता प्राप्ता श्रीर्येन स गतश्रीः । त्रयो गतश्रियः शुश्रुवान् ग्रामणी राजन्यश्चेति । तत्रागतश्रीः सान्नाय्ये महेन्द्र न यजेत । अगतश्रीणां तेषां नित्यमिन्द्रो देवता भवति । और्वगौतमभरद्वाजास्त्रयः सोमयागादनन्तरं नित्यं महेन्द्रं यजेरन् । एतेषा तुसोमात् पूर्वं नित्यमिन्द्रो देवता भवति । और्वादिभिन्नानामगतश्रीणामपि सोमादूर्ध्वं महेन्द्र एव यष्टव्यदेवता इत्यपि सूत्रकारोऽभिप्रैति ।

ततोऽध्वर्युः 'परिस्तृणीत परिधत्ताग्नि परिहितोऽग्निर्यजमानं भुनक्तु । अपां रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिल्लोके' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात् । आग्नीध्रोऽपि तूष्णीं गार्हपत्याहवनीयदक्षिणाग्नीनुदगग्रैः प्रागग्रैश्च दर्भैः परिस्तृणीयात् । अथ वाऽध्वर्योरन्यस्य परिस्तरितुरवचनात् स्वयमात्मानमनुजानीयादितिवदात्मन एव संस्कारार्थं सम्प्रैषः। तेनाध्वर्युरेव स्वयं प्रैषमुक्त्वा पूर्वोक्तक्रमेण तूष्णीं गार्हपत्यादीन् परिस्तृणीत। अथवा परिस्तरणीपक्षे 'परिस्तृणीत' इति गार्हपत्यदक्षिणाग्न्याहवनीयानुदगग्रैः प्रागग्रैश्च दर्भैः प्रत्यग्नि मन्त्रमावर्त्य यजमानः परिस्तृणीयात् । तदनु 'उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशून्'[1] इति सायं

1 सद्यस्कालाया तु 'देवा देवेषु' इति मन्त्रो जप्य., 'उभावग्नी' इति तु न जप्य. । अन्वाधानदिने सायं यद्यपरिस्तीर्णा भवेयुरग्नयस्तदा यजनीयेऽहनि हस्तावनेजनानन्तरं पूर्वोक्तपरिस्तराणि प्रकारान्तरेण कर्तव्यानि ।

परिस्तीर्यमाणेषु जपित्वा 'देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह मावत । इदं शकेयं यदिदं करोम्यात्मा करोत्वात्मने । इदं करिष्ये भेषजमिदं मे विश्वभेषजा । अश्विना प्रावतं युवम्' इति जपित्वोपवसेत् ।

यदेतदग्न्यन्वाधानादि परिस्तरणान्तं कर्मोक्तं तत् सर्वं कृत्वा यजमान उपवसेत् । श्वो यागार्थोऽग्निसमीपे नियमविशिष्टो वास उपवासशब्देनोच्यते । तत्र व्रतनियमाः सूत्रकारेणाभिधीयन्ते । ग्राम्येभ्यो[1] यजमान उपवासं कुर्यात् । आरण्यं[2] नैवारादि अश्नीयात् । माषमांसे च सर्वथा वर्जयेत् । मृगमांसं मधु प्राशातिकं[3] वा भोक्तुं न शक्नुयात् । एतेषां भक्षणे याथाकाम्यं सूत्रकारेणोपदिष्टम् । अपामशने तु विकल्पः सूत्रकाराभिमतो द्रष्टव्यः । यज्जातीयेन हविषा श्वो यष्टा तज्जातीयं हविः पूर्वदिने नाश्नीयात् । यश्चारण्येनैव श्वो यष्टा स अपामशनं कुर्यात्, न वा कुर्यात् । अमावास्यायां रात्रि-जागरणं कुर्वीत । जागरणाशक्तौ सुप्यात्, खट्वादीनामुपरिशयनमेव तु वर्जयेत् । उपरि वा शयीत, सर्वथाऽपि तावद् ब्रह्मचर्यं परिपालयेत् । एके पुनः पौर्णमास्याममावास्यायां चोभयत्र जागरणमभिप्रयन्ति । आहवनी-यागारे गार्हपत्यागारे वा शयनं कुर्वीत । यदा कर्ममध्ये आपस्तम्बीयय-जमानो जञ्जभ्यते तदा प्रायश्चित्तार्थं 'मयि दक्षक्रतू' इति ब्रूयात् । आश्वलायनीययजमानस्तु कर्ममध्ये क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकगन्ध-माघ्राय, अक्षिस्पन्दने कर्णध्वनने चैतस्मिन्निमित्तषट्के 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू' इति जपेत् ।

---

1 तिलाः, माषाः, व्रीहयः, यवा, प्रियङ्गवः, अणवः, गोधूमा इति सप्त ग्राम्य-धान्यानि ।

2 वेणवः, श्यामाकाः, नीवाराः, जर्तिलाः, गवीधुकाः, मर्कटाः, गार्मुताः, कुलुत्था वेति सप्त आरण्यधान्यानि ।

3 प्राशातिक नाम वृक्षादितः पातनेन लब्धं फलादिकम् । प्राशातिकं कोशीधान्यम्, यस्मात् प्रशातनेनोद्ध्रियते इति रुद्रदत्तः ।

## प्रतिपद्दिनकृत्यम्

### तत्राग्निपरिस्तरणम्, पात्रासादनं च

यजमानः सूर्योदयात् पूर्व[1]ममावास्यायास्तन्त्रं प्रक्रमयेत् । तत्रोदितहोमेऽपि उदयात् प्राक् प्रक्रमोऽमावास्यायाः कर्तव्यः । तन्त्रमध्येऽपि स्वकालेऽग्निहोत्रं जुहुयात् । ततोऽध्वर्युः 'कर्मणे वां देवेभ्यः शकेयम्' इति हस्ताववनिज्य 'यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै स्तृणामि सन्तत्यै त्वा यज्ञस्य' इति गार्हपत्यादारभ्य सन्ततामुलपराजीमाऽऽहवनीयादास्तीर्य तूष्णीं दक्षिणामुत्तराञ्च आस्तीर्य आहवनीयस्य दक्षिणतः पूर्वं ब्रह्मणोऽपरं यजमानस्येत्यासने प्रकल्पयेत् । तत उत्तरेण गार्हपत्याहवनीयौ दर्भान् संस्तीर्य स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चेति द्वन्द्व[2] न्यञ्चि दश पात्राणि गार्हपत्यस्योत्तरतः प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवा वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति दश पात्राणि आहवनीयस्योत्तरतः प्रयुज्य योक्त्रं मदन्तीं मेक्षणं वेदाग्राणि अन्वाहार्यस्थालीमुपवेषं पिष्टलेपफलीकरणपात्रं[3] कुम्भीं शाखापवित्रमभिधानी निदाने दारुपात्रं दोहनमिति तान्युत्तरेण द्वन्द्वं न्यञ्चि प्रयुञ्जीत । अत्र केचिदेतेषां पात्राणां संसादनात् पूर्वं प्रणीताप्रणयनस्यासादनमिच्छन्ति ।

अत्रैव प्रसङ्गात् दार्शपौर्णमासिकपात्राणां विवरणं सूत्रकारेणोपन्यस्तम् । स्रुवः खदिरकाष्ठनिर्मितो भवति । जुहूः पर्णमयी कर्तव्या । उपभृत् अश्वत्थकाष्ठनिर्मिता भवति । ध्रुवा विकङ्कतवृक्षनिर्मिता । एतेषां वा

---

1 उदित आदित्येऽग्निहोत्रादनन्तरं पौर्णमास्यास्तन्त्रं प्रक्रमयेत् ।

2 स्फ्यः अष्टौ कपालानि चेत्येकं द्वन्द्वम् । अग्निहोत्रहवणी शूर्पञ्चेत्येकं द्वन्द्वम् । कृष्णाजिनं च शम्या चेत्येकम् । उलूखलं च मुसलञ्चत्येकम् । दृषच्चोपला चेत्येकम् । एवं पञ्च द्वन्द्वानि दश पात्राणि ।

3 'सोमयाजिनोऽसोमयाजिनः पौर्णमास्यामसोमयाजिनश्चामावास्यायां पिष्टलेपफलीकरणपात्रं दर्भं च' इत्यासादनम् । तत्र कुम्भ्यादिदोहनपात्रान्तानां पात्राणां निवृत्तिः, सान्नाय्याभावात् ।

वृक्षाणां मध्ये येन केनापि स्रुचः कारयेत् । ताः स्रुचो बाहुमात्र्योऽरत्निमात्र्य अग्राग्रास्त्वक्तोबिला हंसमुख्यश्च भवन्ति । स्फ्यः, शम्या, प्राशित्रहरण-मिति पात्रत्रय खादिरं कर्त्तव्यम् । यानि तु पात्राणि होमेऽनुपयुक्तानि तानि वारणानि भवेयुः । अत्र पात्रप्रयोगान्ते सन्नयतो यजमानस्य पूर्ववत् पवित्रे कर्त्तव्ये भवतः । सन्नयतस्तु ये सायंदोहार्थे त एवाद्यापि कर्मणे प्रभवतः ।

## ब्रह्मवरणमपां प्रणयनं च

ततोऽध्वर्यु यजमानौ 'भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे' इति ब्रह्माण वृणीयाताम् । तत्रापस्तम्बीयब्रह्मा[1] वृतो वेदेरुत्तर-तस्तिष्ठन् 'अहं भूपतिरह भुवनपतिरि'त्यादिमन्त्रं जपित्वाऽपरेणाहवनीयं दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'निरस्तः परावसुः सह पाप्मना' इत्यङ्गुष्ठोपकनिष्ठिकाभ्या स्वासनात्तृण प्रत्यग्दक्षिणा निरस्याप उपस्पृश्य 'इदमहमर्वाग्वसोः सदने सीदामि' इत्यादिनोपविशेत् । एवं ब्रह्मवरणानन्तरमध्वर्युः 'वानस्पत्योऽसि देवेभ्यः शुन्धस्व' इति प्रणीताप्रणयन चमसमद्भिः परिक्षाल्य सायंदोहकालिकपवित्रान्तर्हित[2] चमसमपरेण गार्हपत्यं निधाय 'अनया पृथिव्याऽपो ग्रहीष्यामि' इति पृथिवीं मनसा ध्यात्वा 'को वो गृह्णाति स वो गृह्णातु कस्मै

---

1 आश्वलायनीयो ब्रह्मा प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद् विहार प्रविश्य समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाहवनीय परीत्य तस्य दक्षिणत उदङ्मुख. स्थित्वा 'निरस्तः परावसुः' इति स्वायतनादङ्गुष्ठोपकनिष्ठि-काभ्या दर्भं नैर्ऋत्या दिशि निरस्याप उपस्पृश्य 'इदमहमर्वावसोः सदने सीदामि' इत्युपविश्य 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञ गोपाय' इति जपेत् ।

2 असोमयाजिनः सोमयाजिनः पौर्णमास्याममावास्यायामसोमयाजिनश्च सायं-दोहकालिकपवित्राभावात्तात्कालिकक्रतपवित्रान्तर्हितमिति विशेषोऽत्रानुसन्धातव्यः ।

वो गृह्णामि पोषाय वः' इति तस्मिंश्चमस उपबिलमप आनीय[1] 'अनया पृथिव्याऽपो गृह्णामि' इति पृथिवीं मनसा ध्यात्वा 'देवो वः सवितोत्पुनातु' इति प्रथममप उत्पूय 'अच्छिद्रेण पवित्रेण' इति द्वितीयमुत्पूय 'वसोः सूर्यस्य रश्मिभिः' इति तृतीयमुत्पूय 'आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ' इत्यभिमन्त्र्य 'ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ' इति सम्प्रैषं कुर्यात् । तदापस्तम्बीयब्रह्मा[2] 'प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेहि' इत्युपांशु जपमुक्त्वा 'ओं३ प्रणय' इत्युच्चैरभ्यनुजानीयात् । प्रणीयमानासु अप्सु अध्वर्युयजमानौ हविष्कृदेहीति प्रैषोच्चारणपर्यन्तं वाग्यतौ[3] स्याताम् । ततोऽध्वर्युः 'को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञं सं सादयन्तु नः । इरं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चतीः' इति चमसं समं प्राणैर्धारयमाणः स्फ्येनोपसंगृह्य स्फ्यमधस्तात् कृत्वाऽविषिञ्चन् हरेत् । हरणसमये 'अनया पृथिव्याऽपः प्रणयानि' इति पृथिवीं मनसा ध्यायेत् । तदनु यजमानः 'भूश्च कश्च वाक् चर्क्च गौश्च वट् च खं च धूश्च नूश्च पूश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्मपूताः स्थ । को वो

---

1 तत्तत्कामनापुरःसरमपि अप्प्रणयनं सूत्रकारेणाभिहितम् । तत्र यो ब्रह्मवर्चस कामयते स कांस्येनाप्प्रणयन कुर्यात् । यश्चात्मनः प्रतिष्ठामभिलषति स मृन्मयेनापः प्रणयेत् । उभयत्रापि तूष्णी प्रणयनं भवति, 'वानस्पत्योऽसि' इति लिङ्गविरोधात् । यदि कश्चित् पशुरूपं फलमिच्छेत् तदा स दार्शपौर्णमासिकमपां प्रणयन गोदोहनेन कुर्यात् । गौर्दुह्यतेऽस्मिन्निति गोदोहनम् । यस्मिन् पात्रे गृहे प्रतिदिनं गौर्दुह्यते तत् पात्रं गोदोहनशब्देनोच्यते ।

2 आश्वलायनीयो ब्रह्मा सम्प्रैष श्रुत्वा 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओ३ प्रणय' इत्यतिसृजत् ।

3 'अन्यद्यज्ञस्य साधनात्' (आ० श्रौ० १।५।३७) इत्याश्वलायनवचनात् यज्ञसाधनवचसोऽन्यत्र वाग्यमन बोध्यम् ।

युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै। याः पुरस्तात् प्रस्रवन्त्युपरिष्टात् सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे' इति प्रणीताः प्रणीयमाना अनुमन्त्रयेत। ततोऽध्वर्युः 'को वो युनक्ति स वो युनक्तु' इत्युत्तरेणाहवनीयं द्रव्यान्तरेणासंस्पृष्टाः प्रणीताः दर्भैरभिच्छाद्य दर्भेषु सादयेत्। आहवनीयस्योत्तरेण स्थिताः प्रणीता अपः 'को वोऽयोक्षीत् स वो विमुञ्चतु' इति मन्त्रोच्चारणरूपविमोकपर्यन्तं तस्मात् स्थानान्न कम्पयेयुः, न प्रेरयेयुः।

## हविर्निर्वापः

तदनन्तरमध्वर्युः 'संविशन्तां दैवीर्विशः पात्राणि देवयज्यायै' इति सपवित्रेण दक्षिणेन पाणिना पात्राणि संमृश्य[1] 'वानस्पत्याऽसि दक्षाय त्वा' इत्यग्निहोत्रहवणीमादाय 'वेषाय त्वा' इति शूर्पमादाय 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' इत्याहवनीये गार्हपत्ये वा प्रतितप्य 'यजमान[2] हविर्निर्वप्स्यामि' इति यजमानमामन्त्रयेत। यजमानश्च 'ओं३ निर्वप' इत्युच्चैरनुजानीयात्। ततोऽध्वर्युः 'उर्वन्तरिक्षमन्विहि' इति शकटायाभिप्रव्रज्य[3] 'धूरसि'[4] इति दक्षिणामुत्तरां वा युगधुरमभिमृश्य 'त्वं देवानामसि सस्नितमम्'[5] इत्युत्तरामीषामालभ्य[6] जपित्वा 'विष्णुस्त्वाऽऽक्रंस्त' इति सव्ये चक्रे दक्षिणं पादमत्याधाय 'अह्रुतमसि हविर्धानम्'[7] इति शकटमारुह्य 'उरु वाताय' इति

1 पात्राणामसम्भवत्यभिमर्शने मन्त्रावृत्तिः कार्या।

2 प्रवसति यजमाने 'यजमान' इत्यस्य स्थाने 'अग्ने' इत्यग्निमामन्त्रयेत।

3 शकटं त्वपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं व्रीहिपूर्णं यवपूर्णं वाऽवस्थित भवति।

4 'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः' (तै० सं० १।१।४।१) इति समग्रो मन्त्रः।

5 'त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमम्' इति सम्पूर्णो मन्त्रः।

6 ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः।

7 'अह्रुतमसि हविर्धानं दृंहस्व मा ह्वाः' (तै० सं० १।१।४।१) इति समग्रो मन्त्रः।

परीणाहमपच्छाद्य[1] 'मित्रस्य त्वा चक्षुषा प्रेक्षे'[2] इति पुरोडाशीयान् व्रीहीन् यवान् वा प्रेक्ष्य 'निरस्तं रक्षो निरस्तोऽघशसः' इति यदन्यत् पुरोडाशीयेभ्यस्तन्निरस्याप उपस्पृश्य 'ऊर्जाय वः पयो मयि धेहि' इति निरस्तमभिमन्त्र्य 'चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीत बर्हिः । केतो अग्नि. । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः' इति दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन् शूर्पे 'यच्छन्तां पञ्च' इति व्रीहीणां यवानां वा मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये[3] जुष्टं निर्वपामि' इत्यग्निहोत्रहवण्या त्रिर्यजुषा तूष्णीं चतुर्थं हवींषि निर्वपेत्, पवित्रवत्याऽग्निहोत्रहवण्या वा तानि निर्वपेत् । निर्वापानन्तरं यजमानः 'अग्नि होतारमिह तं हुवे देवान् यज्ञियानिह यान् हवामहे । आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य' इति हविर्निरुप्यमाणमभिमन्त्रयेत ।[4]

ततोऽध्वर्युः निरुप्तेष्वन्वाप्य[5] 'इदं देवानाम्' इति निरुप्तानभिमृश्य 'इदमु नः सह' इत्यवशिष्टानभिमृश्य 'स्फात्यै त्वा नारात्यै' इति निरुप्तानेवाभिमन्त्र्य 'इदमहं निर्वरुणस्य पाशात्' इत्युपनिष्क्रम्य 'स्वरभिव्यख्यम्' इति प्राचो दिशं प्रेक्ष्य 'सुवरभिविख्येषम्' इति सर्वं विहारमनुवीक्ष्य 'वैश्वानरं ज्योतिः' इत्याहवनीयं वीक्ष्य 'स्वाहा द्यावापृथिवीभ्याम्' इति स्कन्नानभिमन्त्र्य 'दृंहन्ता दुर्या द्यावापृथिव्योः' इति

---

1 परीणाहः कटः । धान्यस्योपरि प्रसारितमाच्छादनमित्यर्थः ।

2 'मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिंसिषम्' इति समग्रो मन्त्रः ।

3 पौर्णमास्या 'देवस्य त्वा' इत्यनुद्रुत्य 'अग्नीषोमाभ्यां जुष्टं निर्वपामि' 'इन्द्राय वैमृधाय जुष्टं निर्वपामि' इति मन्त्रे विशेषः कर्त्तव्य । दर्शे तु 'इन्द्राग्निभ्यां जुष्टं निर्वपामि' इति विशेषः ।

4 हविर्निरुप्यते यस्मिन् पात्रे तद्धविर्निर्वपणं पात्रम् । 'अग्नि होतारम्' इति मन्त्रेण पात्रमेवाभिमृशेत् न हविरिति केचन वदन्ति ।

5 यत्र चतुर्मुष्टिनिर्वापा विहितस्तत्रैवान्वावापः कर्त्तव्यः । निर्वापानन्तरं पुनरपि तत्र कियतश्चनांशस्य प्रक्षेपः अन्वावापः ।

शकटात् प्रत्यवरोह्य 'उर्वन्तरिक्षमन्विहि' इत्याहृत्य 'अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्यं रक्षस्व'[1] इत्यपरेणाहवनीयमुपसादयेत् । यदि शकटस्थानीयायाः पात्र्याः सकाशान्निर्वपेत्तदा पात्र्या दक्षिणतः स्फ्यमुपधाय पात्र्यां पुरोडाशीयानोप्य तां शकटस्थानस्थामालभ्य 'अह्रुतमसि हविर्धानं दृंहस्व मा ह्वाः' इत्यन्ताच्छकटमन्त्राञ्जपित्वा 'मित्रस्य त्वा चक्षुषा प्रेक्षे' इत्यारभ्य 'हव्यं रक्षस्व' इत्यन्तं सर्वं कर्त्तव्यम् । तत्र शकटमन्त्राभावात् परीणाहस्य शकटाङ्गाभावाच्च 'उरु वाताय' इति मन्त्रस्य लोपः कर्तव्यः । हविरासादनात् परं यजमानः 'कस्त्वा युनक्ति स त्वा युनक्तु' इति सर्वं विहारमनुवीक्षेत ।[2]

## हविःप्रोक्षणम्

ततोऽध्वर्युः सशुकायामग्निहोत्रहवण्यामप आनीय 'देवो वः सवितोत्पुनातु' इति प्रथममुत्पूय 'अच्छिद्रेण पवित्रेण' इति द्वितीयमुत्पूय 'वसोः सूर्यस्य रश्मिभिः' इति तृतीयमुत्पूय 'आपो देवीरग्रेपुव.' इत्यभिमन्त्र्य 'ब्रह्मन् प्रोक्षिष्यामि' इति ब्रह्माणमामन्त्र्य[3] 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्ट प्रोक्षामि'[4] इति सकृन्मन्त्रेण

---

1 'अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्यं रक्षस्वाग्नीषोमौ हव्यं रक्षेथामिन्द्रवैमृध हव्यं रक्षस्व' इति पौर्णमास्या विशेष.। 'अदित्यास्त्वोपस्थे सादयाम्यग्ने हव्यं रक्षस्वेन्द्राग्नी हव्यं रक्षेथाम्' इति दर्शे विशेष.। भारद्वाजोऽपि एवमाह—'परिददाति अग्ने हव्यं रक्षस्व, अग्नीषोमौ हव्य रक्षेथाम्, इन्द्राग्नी हव्यं रक्षेथाम् इति यथादेवतम्' (भा० श्रौ० १।२०।७) ।

2 'विहारमनुवीक्षेत' इत्येव सिद्धे सर्वं विहारमिति सर्वशब्दप्रयोगात् पात्रसहितस्य सर्वस्य विहारस्यानुवीक्षणं लभ्यत इति ।

3 एवमामन्त्रितः सन्नापस्तम्बब्रह्मा 'प्रोक्ष यज्ञ देवता वर्धय त्वम्' इत्यादिपूर्वोक्तं मन्त्रमुपांशु जपित्वा 'ओं३ प्रोक्ष' इत्युच्चैरध्वर्युमनुजानीयात् । आश्वलायनीयो ब्रह्मा 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओं३ प्रोक्ष' इत्यतिसृजेत् ।

4 'देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां वो जुष्टं प्रोक्षामीन्द्राय वैमृधाय वो जुष्टं प्रोक्षामि' इति पौर्णमास्यां विशेषः । दर्शे तु 'देवस्य त्वा सवितु. प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यां वो जुष्टं प्रोक्षामि' इति विशेषः ।

द्विस्तूष्णीं हविः प्रोक्ष्य अग्निमभिप्रोक्षेत् । यं प्रति द्वेष्यमाचरेत् तमभिप्रोक्षेत् । इदमेव तत्राभिप्रोक्षणे यज्ञोपघातप्रायश्चित्तं वेदितव्यम् । ततः स्वात्मानं दक्षिणमावर्त्य न्यञ्चि पात्राण्युत्तानानि कृत्वा 'शुन्धध्वं दैव्याय कर्मणे' इति सपवित्रेण पाणिना सकृन्मन्त्रेण द्विस्तूष्णीं पात्राणि प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निदध्यात् ।

## अवहननम्

तदनु 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इति कृष्णाजिनमादाय 'अवधूत रक्षोऽवधूता अरातय.' इत्युत्करे कृष्णाजिनमूर्ध्वग्रीवं बहिष्ठाद्विशसनं[1] त्रिरवधूय 'अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु' इत्युत्तरेण गार्हपत्यमुत्करदेशे वा कृष्णाजिनं प्रतीचीनग्रीवमुत्तरलोमोपस्तीर्य पुरस्तात्प्रतीची भसदमुपसमस्य[2] कृष्णाजिनमनुत्सृजन् 'अधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्तु' इति तस्मिन्नुलूखलं प्रतिष्ठाप्य तदनुत्सृजन् 'अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि' इति तस्मिन्नुलूखले त्रिर्यजुषा तूष्णीं चतुर्थं हविरोप्य 'अद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यं सुशमि शमिष्व' इति मुसलमादाय 'हविष्कृदेहि—हविष्कृदेहि—हविष्कृदेहि' इति वारत्रयं हविष्कृतमाह्वयेत् । तत्र ब्राह्मणक्षत्रियवैश्यानां यथाक्रमं 'हविष्कृदेहि' 'हविष्कृदागहि' 'हविष्कृदाद्रव' इति मन्त्रो भवति । शूद्रस्य निषादस्थपतेः 'हविष्कृदाधाव' इति भवति, केवलशूद्रस्य यागानुष्ठानेऽनधिकारात् । सर्वेषां वर्णानामविशेषेण प्रथमं यजुरेव भवतीत्यपि मतान्तरं सूत्रकारेण कीर्तितम् । आह्वानानन्तरं हविष्कृत् 'अव रक्षो दिवः सपत्नं वध्यासम्' इति व्रीहीनवहन्यात् । ततोऽध्वर्युः 'उच्चैः समाहन्तवै'[3] इत्याग्नीध्राय प्रैषं दद्यात् । आग्नीध्रोऽपि

---

1 बहिष्ठाद्विशसनमिति यथाऽवधूयमानस्य बहिः पृष्ठभागो भवत्यन्तर्लोमभागस्तथेत्यर्थः ।

2 भसत् कटिप्रदेशः । उपसमस्य द्विगुणीकृत्य । कटिप्रदेशं पुरस्ताद्भागेनाधस्तात्प्रतीचीं गमयित्वाऽनन्तरप्रदेशेन सह द्विगुणितां कृत्वेत्यर्थः ।

3 समाहन्तवै समाहन्तव्यं ताडनीयमित्यर्थः ।

'कुटरुरसि मधुजिह्वः' इत्यश्मानमादाय 'इषमावदोर्जमावद'[1] इति दृषदुपले समाहनन् द्विर्दृषदि सकृदुपले त्रिः सञ्चारयन्नवकृत्वः सम्पादयेत्। यत्र पर्यायसमाप्तिस्तत्रोपक्रमः कर्त्तव्यः। त्रिरावृत्तिर्मन्त्रस्य भवति। सावित्रेण[2] यजुषा वा शम्यामादाय तया समाहननं कुर्यात्।

ततोऽध्वर्युः 'वर्षवृद्धमसि' इत्युलूखलस्य पुरस्तादुत्तरतो वा शूर्पमुपहृत्य 'वर्षवृद्धाः स्थ' इत्यवहृतान् तण्डुलानभिमन्त्र्य 'प्रति त्वा वर्षवृद्धं वेत्तु' इति तण्डुलान् शूर्पे उदोप्य 'परापूतं रक्षः परापूता अरातयः' इत्युत्करे शूर्पेण तुषान् प्रोह्य 'प्रविद्धं रक्षः पराध्माता अमित्राः' इति तुषान् प्रस्कन्दतोऽनुमन्त्र्य मध्यमे पुरोडाशकपाले तुषानोप्य 'रक्षसां भागोऽसि' इत्यधस्तात् कृष्णाजिनस्योत्तरमपरमवान्तरदेशं वाऽऽवपेत्। बह्वृचानां मते तुषोपवपनं हस्तेनैव कर्त्तव्यम्। ततोऽध्वर्युः अद्भिः कपालं संस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य 'वायुर्वो विविनक्तु' इति सतुषवितुषान् पृथक्कृत्य 'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' इति पात्र्यां तण्डुलान् प्रस्कन्द्य 'अदब्धेन वश्चक्षुषाऽवपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाऽऽशिषमाशासे' इत्यवेक्ष्य तण्डुलानादाय तूष्णीमुलूखले न्युप्य 'त्रिष्फलीकर्त्तवै' इति पत्नीं सम्प्रेष्येत्। ततः पत्नी[3] 'देवेभ्यः शुन्धध्वम्' 'देवेभ्यः शुध्यध्वम्' 'देवेभ्यः शुम्भध्वम्' इति मन्त्रत्रयान्ते तान् सुफलीकृतान्[4] कुर्यात्तूष्णीं वा। तदनु अध्वर्युः फलीकरणं प्रज्ञातं[5] निदध्यात्।

---

1 'इषमावदोर्जमावद द्युमद्वदत वयं सङ्घातं जेष्म' (तै० स० १।१।५।२) इति समग्रो मन्त्रः।

2 'देवस्य त्वा सवितुः प्रसवे' इति मन्त्रः सावित्रं यजुरुच्यते।

3 अनालम्भुकत्वादिना पत्न्यामसन्निहिताया कमप्यवहन्तारं परिकर्मिणं सम्प्रेष्येत्। ततः स एवावहन्यात्।

4 फलीकरणं नाम तुषविमोकार्थं सकृदवहतानां तण्डुलानामुपरिगतकणापाकरणाय पुनरवहननम्।

5 अस्यानन्तरं दक्षिणाग्नौ होमः करिष्यते। अतः प्रज्ञातं निधानम्।

## हविःपेषणम्

ततस्तण्डुलान् प्रक्षाल्य 'त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयमापस्तत् प्रवहतादितः' इति प्रक्षालनोदकमुत्करे त्रिर्निनीयाप उपस्पृशेत् । अत्राध्वर्युः पूर्ववत् सावित्रेण यजुषा कृष्णाजिनमादाय 'अवधूतं रक्षोऽवधूता अरातयः' इत्युत्करे ऊर्ध्वग्रीवं बहिष्ठाद्विशसनं तत्त्रिरवधूय 'अदित्यास्त्वगसि' इत्युत्तरेण गार्हपत्यमुत्करदेशे वा कृष्णाजिनं प्रतीचीनग्रीवमुत्तरलोमोपस्तीर्य पुरस्तात्प्रतीचीं भसदमुपसमस्यानुत्सृजन् कृष्णाजिनं 'दिवः स्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्तु' इति कृष्णाजिन उदीचीनकुम्बां[1] शम्यां निधाय 'धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु' इति शम्यायां दृषदमत्याधाय दृषदमनुत्सृजन् 'धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु' इति दृषद्युपलामत्याधाय 'अंशवः स्थ मधुमन्तः' इति तण्डुलानभिमन्त्र्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपामि धान्यमसि धिनुहि देवान्'[2] इति यावन्तस्तण्डुलाः सकृत् पेष्टुं शक्यन्ते तावतस्तण्डुलान् दृषदि त्रिर्यजुषा तूष्णीं चतुर्थमध्युप्य 'प्राणाय त्वा' इति प्राचीमुपलां प्राप्य्य 'अपानाय त्वा' इति प्रतीचीमुपलां प्रोहृत्य 'व्यानाय त्वा' इति मध्यदेशे व्यवधार्य 'प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा' इति सन्ततं पिष्ट्वा 'दीर्घामनुप्रसितिमायुषे धाम्' इति प्राचीमन्ततोऽनुप्रोह्य 'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' इति कृष्णाजिने पिष्टानि प्रस्कन्द्य 'अदब्धेन वश्चक्षुषाऽवेक्षे' इत्यवेक्ष्य 'असंवपन्तो पिंषाणूनि कुरुतात्' इत्यवशिष्टतण्डुलार्थं पत्न्या दास्या वा प्रैषं कुर्यात् । ततः पत्नी दासी वा पिष्टानि अणूनि कुर्यात् । अत्र दासी

---

1 शम्यायाः स्थविष्ठोऽन्तः कुम्बमुच्यते । तदुत्तरस्या दिशि यथा स्यात्तथेत्यर्थः ।

2 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधिवपामीन्द्राय वैमृधाय जुष्टमधिवपामि धान्यमसि धिनुहि देवान्' इति पौर्णमास्या विशेषः । दर्शे तु—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपामीन्द्राग्निभ्यां जुष्टमधिवपामि धान्यमसि धिनुहि देवान्' इति विशेषः ।

वाऽवहननं कुर्यात् । अपरे पुनः पत्नी अवघातमेव कुर्यात् न पेषणं, तत्तु शूद्रा दास्येव कुर्यादिति वदन्ति ।

## कपालोपधानम्

आहवनीये गार्हपत्ये वा हविःश्रपणं सूत्रकाराभिमतम् । तत्राध्वर्युः पिष्ट[1]लेपं प्रज्ञातं निधाय 'धृष्टिरसि ब्रह्म यच्छ' इत्युपवेषमादाय 'रक्षसः पाणिं दहाहिरसि बुध्निय' इत्यभिमन्त्र्य 'अपाग्नेऽग्निमामादं जहि' इति गार्हपत्यात् प्रत्यञ्चावङ्गारौ निर्वर्त्य 'निष्क्रव्यादं सेध' इति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्याप उपस्पृश्य 'आ देवयज वह' इति दक्षिणमवस्थाप्य 'ध्रुवमसि'[2] इति तस्मिन्नङ्गारे मध्यमं पुरोडाशकपालमुपधाय 'निर्दग्धं रक्षो निर्दग्धा अरातयः' इति कपालेऽङ्गारमत्याधाय 'धर्त्रमसि'[3] इति मध्यमस्य पुरस्ताद्द्वितीय 'धरुणमसि'[4] इति तस्माद् द्वितीयात् पुरस्तात्तृतीयं 'चिदसि विश्वासु दिक्षु सीद' इनि मध्यमस्य दक्षिणतश्चतुर्थं 'परिचिदसि विश्वासु दिक्षु सीद' इति मध्यमस्योत्तरतः पञ्चम 'मरुतां शर्धोऽसि' इति मध्यमस्य पश्चात् षष्ठं 'धर्मासि'[5] इति दक्षिणस्य पुरस्तात् सप्तमं 'चितः स्थ' इत्युत्तरस्य पुरस्तादष्टमं कपालमुपदध्यात् । अनेनैव क्रमेणाष्टौ कपालान्युपदध्यात्[6] । अत्रापस्तम्बेन कश्चन विकल्पोऽभिहितः—

---

1 अस्यापि दक्षिणाग्नावुत्तरत्र होमो भविष्यति ।

2 'ध्रुवमसि पृथिवी दृंहायुर्दृंह प्रजा दृंह सजातानस्मै यजमानाय पर्यूह' (तै० स० १।१।७।१) इति समग्रो मन्त्रः ।

3 'धर्त्रमस्यन्तरिक्ष दृंह प्राण दृंहापान दृंह सजातानस्मै यजमानाय पर्यूह' इति समग्रो मन्त्रः।

4 'धरुणमसि दिव दृंह चक्षुर्दृंह श्रोत्र दृंह सजातानस्मै यजमानाय पर्यूह' इति समग्रो मन्त्र ।

5 'धर्मासि दिशो दृंह योनि दृंह प्रजा दृंह सजातानस्मै यजमानाय पर्यूह' इति समग्रो मन्त्रः ।

6 पौर्णमास्याम् 'अपाग्नेऽग्निमामादं जहि' इत्याद्यङ्गारनिर्वर्तनादिविधिना आग्नेयवदग्नीषोमीयस्याष्टौ कपालान्युपधाय नैर्ऋत्यां वायव्यामैशान्यां 'चितः स्थोर्ध्वचितः' इत्यनेन मन्त्रेणैकैकं कपाल यथायोगमुपदध्यात् । एवमेवैन्द्रवैमृधस्यापि ज्ञेयम् । दर्शे ऐन्द्राग्नस्याप्येवमेव कपालोपधान कर्तव्यम् ।

मध्यमं कपालमुपधाय सव्यस्य पाणेरङ्गुल्याऽभिनिधाय 'निर्दग्धं रक्षो निर्दग्धा अरातयः' इति तस्मिन्नेव कपालेऽङ्गारानत्याधाय 'धर्त्रमसि' इति तस्य पश्चात् तृतीय 'धरुणमसि' इति तस्य पुरस्तात् चतुर्थं कपालमुपधाय इतराणि कपालानि पुरोडाशस्थापनं यथा भवति तथोपसादयेदिति। वाजसनेयिनस्तु[1] प्रतिकपालं तस्य तस्याङ्गुल्याऽभिनिधानमङ्गाराधिवर्तनं चाभिप्रयन्ति। यदि अष्टाभ्यः कपालेभ्योऽधिकानि उपधीयमानानि भवेयुस्तदा अष्टभ्य ऊर्ध्वं 'चितः स्थोर्ध्वचितः' इत्युपदध्यात् तूष्णी वेति।

## हविःश्रपणम्

ततोऽध्वर्युः 'भृगूणामङ्गिरसां तपसा तप्यध्वम्'[2] इति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रित्य[3] प्रक्षालितायां निष्टप्तोपवातायां पवित्रवत्यां पात्र्यां 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं सवपामि'[4] इति कृष्णाजिनात् पिष्टानि त्रिर्यजुषा तूष्णीं चतुर्थं समोप्य वाच नियम्य 'देवो वः सवितोत्पुनातु' इति पिष्टानि प्रथममुत्पूय 'अच्छिद्रेण पवित्रेण' इति पिष्टानि द्वितीयमुत्पूय 'वसोः सूर्यस्य रश्मिभिः' इति पिष्टानि तृतीयमत्पूय प्रणीताभिः तानि संयुत्य स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य 'समापो अद्भिरग्मत' [5] इति पिष्टेष्वानीय 'अद्भ्यः परिप्रजाताः'[6] इति तप्ताभिरद्भिरनुपरिप्लावयेत्।

---

1 का० श्रौ० २।४।२८

2 पौर्णमास्याममावास्यायां चायं मन्त्रः प्रतिकपालयोगमावर्तनीयः।

3 तप्ता आपो मदन्त्यः।

4 पौर्णमास्या 'देवस्य त्वा' इत्यनुद्रुत्य 'अग्नये जुष्टं संवपाम्यग्नीषोमाभ्यां जुष्टं संवपामि' इति विशेष कर्त्तव्यः। दर्शे तु 'देवस्य त्वा' इत्यनुद्रुत्य 'अग्नये जुष्टं संवपामीन्द्राग्निभ्यां जुष्ट संवपामि' इति विशेषः कर्त्तव्यः।

5 'समापो अद्भिरग्मत समोषधयो रसेन सं रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वम्' (तै० स० १।१।८।१) इति समग्रो मन्त्रः।

6 'अद्भ्यः परिप्रजाताः स्थ समद्भिः पृच्यध्वम् (तै० सं० १।१।८।१) इति समग्रो मन्त्रः।

## सयवनं पुरोडाशसम्पादनञ्च

ततः 'जनयत्यै त्वा संयौमि' इति मेक्षणेन संयुत्य[1] 'मखस्य शिरोऽसि' इति पिण्डं कृत्वा[2] अनुङ्गमनपूपाकृति कूर्मस्येव प्रतिकृतिमश्वशफमात्रं पुरोडाशं कृत्वा[3] 'इदमहं सेनाया अभीत्वर्यै मुखमपोहामि' इति वेदेन कपालेभ्योऽङ्गारानपोह्य[4] 'घर्मोऽसि विश्वायुः' इत्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रित्याङ्गुली.[5] प्रक्षाल्य 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्' इति पुरोडाशं प्रथयन् सर्वाणि कपालानि प्रथयित्वा[6] 'त्वच गृह्णीष्व' इत्यद्भिः श्लक्ष्णीकृत्याङ्गुली.[7] प्रक्षाल्य सायंदोहकुम्भीमानीय[8] 'अन्तरितं रक्षोऽन्तरिता अरातयः' इति सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वा तदुल्मुकं निरस्याप उपस्पृश्य पुनरुल्मुकानि गृहीत्वा 'देवस्त्वा सविता श्रपयतु' इत्युल्मुकैः परितप्य[9]

---

1 सयवन जलेन मिश्रीकरणम् । सयुत्य पिष्टान्यपश्च मेलयित्वा ।

2 पौर्णमास्या पिण्डकरणानन्तर —'यथाभाग व्यावर्तध्वम्' इत्याग्नेय विभज्य 'यथाभाग व्यावर्तेथाम्' इत्यग्नीषोमीयैन्द्रवैमृधौ विभजेत् । ततः 'इदमग्नीषोमयोः' 'इदमिन्द्रस्य वैमृधस्य' इत्यन्तयोरेव निर्देशपूर्वकाभिमर्शो नाग्नेयस्य निर्देशाभिमर्श इति । दर्शे तु 'यथाभाग व्यावर्तेथाम्' इति विभज्य 'समौ पिण्डौ कृत्वा' (आप० श्रौ० १।८।५) इति सूत्राद्यथा प्रतिदैवतं समं विभजनं स्यात्तथा विभागकरणमिति गम्यते। ततः 'इदमग्ने.' 'इदमिन्द्राग्न्योः' इत्यभिमृशेदिति विशेषः ।

3 पौर्णमास्यामपि पुरोडाशकरणमेवमेव । अमावास्यायामपि तथैव ।

4 'इदमहं सेनाया अभीत्वर्यै मुखमपोहामि' इति मन्त्र प्रतिकपालयोगमुक्त्वा अङ्गारानपोहेत् ।

5 'घर्मोऽसि विश्वायु.' इत्याग्नेयवत् प्रतिपुरोडाश मन्त्रमावर्तयेत् ।

6 'उरु प्रथस्वोरु ते यज्ञपति. प्रथताम्' इति प्रतिपुरोडाशप्रथनमावृत्ति कार्या ।

7 'त्वच गृह्णीष्व' इति मन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

8 पौर्णमास्या सान्नाय्याभावात् सायंदोहकुम्भीनयन नास्ति । असोमयाजिनोऽमावास्यायामपि नास्ति ।

9 'देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके' इति परितपनमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

'अग्निस्ते तनुवं मातिधाक्'[1] इति दर्भैर्ज्वलद्भिस्तृणादिभिर्वाऽभिज्वाल्य 'अविदहन्तः श्रपयत' इत्याग्नीध्रं सम्प्रेष्य वाचं विसृजेत । तत आग्नीध्रो हवींषि सुशृतानि कुर्यात् ।

### भस्माध्यूहनम्, उदकनिनयनञ्च

तदनन्तरमध्वर्युः 'सं ब्रह्मणा पृच्यस्व' इति वेदेन पुरोडाशे साङ्गार भस्माध्यूह्य[2], अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्यैकीकृत्य स्फ्येनान्तर्वेदि तिस्रो लेखाः प्राचीरुदीचीर्वा लिखित्वा तास्वसंस्यन्दयन्[3] 'एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा' इत्येतैः प्रतिमन्त्रं प्रत्यगपवर्गमुदकं त्रिर्निनयेत् । तिसृषु लेखासु उदकं निनीय तत्र वा पृथगुल्मुकेनाभितपेत् ।

### वेदिकरणम्, स्तम्बयजुर्हरणञ्च

ततोऽध्वर्युः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इति स्फ्यमादाय 'इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजाः' इत्यभिमन्त्र्य 'हरस्ते मा प्रतिगाम्' इति दर्भेण स्रुववत् सम्मृज्य दर्भमुत्करे निरस्याप उपस्पृश्यापरेणाहवनीयम् 'एकं द्वे त्रीणि चत्वारि' इति स्फ्यकृतेन मानेन यजमानमात्रीमपरिमितां वा प्रागपवर्गां वेदिं कृत्वा 'वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिः' इति पुरस्तात् स्तम्बयजुष उपरिष्टाद्वा[4] वेदेन वेदिं त्रिः सम्मृज्यात् । ततो यजमानः 'चतुः-

---

1 'अग्निस्ते तनुवं मातिधागग्ने हव्यं रक्षस्व' इत्यभिज्वलनमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

2 'सं ब्रह्मणा पृच्यस्व' इति भस्माध्यूहनमन्त्रं प्रतिपुरोडाशमावर्तयेत् ।

3 यथा न निर्गच्छत्युदकं लेखाभ्यस्तथा कुर्वन्नित्यर्थः ।

4 उपरिष्टान्नाम स्तम्बयजुषो हरणादुपरिष्टात् खनिप्रत्यवेक्षणात् प्राग्वेदेन वेदिं त्रिः सम्मृज्यात् ।

शिखण्डा 'युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय मह्य धुक्ष्व यजमानाय कामान्' इति वेदिं सम्मृज्यमानामनुमन्त्रयेत।

तदनन्तरमध्वर्युः 'पृथिव्यै वर्मासि' इति वेदेः पूर्वार्धे वितृतीयदेशे उदगग्रं प्रागग्रं वा दर्भं निधाय 'पृथिवि देवयजनि'[1] इति तस्मिन्नेव स्थाने स्फ्येन तृणं प्रहृत्याप उपस्पृश्य 'अपहतोऽररुः पृथिव्यै' इति स्फ्येन सतृणान् पांसूनपादाय 'व्रजं गच्छ गोस्थानम' इति हरेत्। यजमानस्तु 'यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि' इति स्तम्ब[2]यजुर्ह्रियमाणमनुमन्त्रयेत। ततोऽध्वर्युः 'वर्षतु ते द्यौः' इति वेदिं यजमानं वा प्रत्यवेक्ष्य 'बधान देव सवितः'[3] इत्युत्करे[4] स्तम्बयजुर्निवपेत्। तत आग्नीध्रः 'अररुस्ते दिवं मा स्कान्' इत्युत्करे न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात्। यजमानस्तु 'इद तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम्। मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीषु' इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत।

तदनु अध्वर्युः 'अपाररुम देवयजनं पृथिव्याः' इति द्वितीयं प्रहृत्याप उपस्पृश्य 'अपहतोऽररुः पृथिव्यै देवयजन्यै' इति स्फ्येन सतृणान् पांसूनपादाय पूर्ववत् 'व्रजं गच्छ गोस्थानम्' इति हरेत्। हरणानन्तरं यजमानोऽपि पूर्ववत् 'यो मा हृदा' इत्यनुमन्त्रणं कुर्यात्। ततोऽध्वर्युः प्राग्वदेव 'वर्षतु ते द्यौः' इति वेदिं यजमानं वा प्रत्यवेक्ष्य 'बधान देव

---

1 'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' (तै० सं० १।१।८।१) इति समग्रो मन्त्रः।

2 छिन्नस्य तृणस्य पांसूनां च व्यस्तसमस्तानां च स्तम्बयजुरिति नामधेयम्। सतृणाः पांसव इति केचित्।

3 'बधान देव सवितः परमस्या परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्' (तै० सं० १।१।९।१) इति समग्रो मन्त्रः।

4 वेदिप्रदेशादुत्तरतः पुरस्ताद्वितृतीयदेशे द्विपदेऽपरिमिते वा देशे यत्र न्युप्तं स्तम्बयजुः स उत्करः।

सवितः' इत्यादिमन्त्रेण उत्करे तन्निवपेत् । आग्नीध्रस्तु 'अवबाढं रक्ष' इत्युत्करे द्वितीयं न्युप्त स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात् । यजमानः पूर्ववत् 'इदं तस्मै' इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत । तृतीयस्तम्बयजुर्हरणावसरेऽध्वर्युः 'अररुर्द्यां मा पप्तत्' इति स्फ्येन तृतीयं प्रहृत्याप उपस्पृश्य 'अपहतोऽररुः पृथिव्या अदेवयजनः' इति स्फ्येन सतृणान् पांसूनपादाय 'व्रजं गच्छ गोस्थानम्' इति पूर्ववद्धरेत् । एव हरणानन्तरं यजमानः पूर्ववत् 'यो मा हृदा' इत्यनुमन्त्रयेत । अध्वर्युरपि पूर्वोक्तेनैव मन्त्रेण यजमानं वेदिं वा प्रत्यवेक्ष्य उत्करे स्तम्बयजुर्निवपेत् । तत आग्नीध्रः 'अवबाढोऽघशसः' इत्युत्करे तृतीयं न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात् । यजमानोऽपि पूर्ववत् 'इदं तस्मै' इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत । ततोऽध्वर्युस्तूष्णी[1] चतुर्थं छित्त्वाऽप उपस्पृश्य तूष्णी स्फ्येन दर्भशेषेण सह सतृणान् पांसूनपादाय तूष्णीं हृत्वा तूष्णीं वेदिं यजमानं वा प्रत्यवेक्ष्य तूष्णीमुत्करे निवपेत् । ततो यजमानः 'यो मा हृदा' इति स्तम्बयजुस्तूष्णीं ह्रियमाणमनुमन्त्रयेत । तत आग्नीध्रः 'अवबाढा यातुधानाः' इत्युत्करे चतुर्थं न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णीयात् । यजमानोऽपि 'इदं तस्मै' इत्युत्करमभिगृह्यमाणमनुमन्त्रयेत ।

## वेदिपरिग्रहः

ततोऽध्वर्युः 'द्रप्सस्ते द्यां मा स्कान्' इति खनिं[2] प्रत्यवेक्ष्य 'वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा'[3] इति स्फ्येन दक्षिणतो दक्षिणश्रोणिमारभ्य दक्षिणांसपर्यन्तं वेदेः स्वीकारचिह्नीभूतां रेखां कृत्वा 'रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा'[4] इति स्फ्येन पश्चाद्दक्षिणश्रोणिमारभ्योत्तरश्रोणिपर्यन्तं

---

1 स्तम्बयजुषस्तूष्णीं हरणेऽपि 'यो मा हृदा' इति मन्त्रेण यजमानकर्तृकमनुमन्त्रणमवश्य कर्तव्यम्, स्तम्बयजुर्ह्रियमाणमित्यविशेषवचनात् । रुद्रदत्तस्तु अत्रानुमन्त्रण नेच्छति ।

2 यतः पांसव उपात्ताः स प्रदेशः खनिरित्युच्यते ।

3 तै० सं० १।१।८।२

4 तै० सं० १।१।८।२

वेदेः स्वीकारचिह्नीभूतां रेखां कृत्वा 'आदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा' इति स्फ्येनोत्तरत उत्तरश्रोणिमारभ्योत्तरांसपर्यन्तं वेदेः स्वीकारचिह्नीभूतां रेखां कुर्यात् । ततो यजमानः 'यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामि' इति वेदिं परिगृह्यमाणामनुमन्त्रयेत ।

अनुमन्त्रणात् परमध्वर्युः 'अपारुरुम देवयजनं पृथिव्या अदेवयजनो जहि' इति स्फ्येन वेदिभूमेरुपरितनां मृदमुद्धन्यात् । ततो यजमानः 'यदुद्धन्तो जहिंसिम पृथिवीमोषधीरपः । अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् । तदुद्धन्तो जहिंसिम क्रूरमस्या वेदिं चकृम मनसा देवयन्तः । मा तेन हेड उपगाम भूम्याः शिवा नो विश्वैर्भुवनेभिरस्तु' इत्युद्धन्यमानामनुमन्त्रयेत । आग्नीध्रश्च अध्वर्युणा वेदेरुपरितनामुद्धतां मृदमुत्करे त्रिर्निवपेत् । तदनन्तरमध्वर्युः 'इमान्नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे । इमान्देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु' इत्याग्नीध्राय सम्प्रैषं कुर्यात् । एवं प्रेषित आग्नीध्रः 'देवस्य सवितुः सवे'[1] इति द्व्यङ्गुलसम्मितां[2] पुरीषवतीं खात्वाऽप उपस्पृश्य वेदिं दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा कृत्वा प्राञ्चौ वेद्यंसावुन्नीय तथा प्रतीच्यौ श्रोणी उन्नीय पुरस्तात्तनीयसी पश्चात् प्रथीयसीं च कृत्वा मध्ये सन्नततरां कुर्यात् । ततो यजमानः 'भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयांसि । यज्ञिया यज्ञं विचयन्ति शञ्चौषधीराप इह शक्वरीश्च' इति वेदिं क्रियमाणामनुमन्त्रयेत । यत्त्रौषध्यादेश्छिन्नस्य मूलमतीत्य तिष्ठति पुरीषं तत् स्फ्येन छिन्द्यात् न नखेन । यत्तु पुरीषमतिरिच्यते तदुत्करे निवपेत् । यश्च यजमानः पशून् कामयते स आहार्यपुरीषां[3] वेदिं कुर्यात् । खननात् प्राग् यत् पुरीषमाहरेत्तत् खननमन्त्रेण खनेदिति सूत्रकारोऽभिप्रैति ।

---

1 'देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः' (तै० सं० १।१।९।२) इति समग्रो मन्त्रः ।

2 वेदिपरिमाणमापस्तम्बेन एवमुक्तम्—द्व्यङ्गुलपरिमितां त्र्यङ्गुलपरिमितां चतुरङ्गुलपरिमितां, पादस्य पश्चिमभागे यावाञ्छुक्लो देशस्तावत्परिमितां, त्रयोदशाङ्गुलपरिमितां रथचक्रवर्त्ममात्रीं कर्षमात्रीं प्रादेशमात्रीं वा वेदिं खनेत् ।

3 यत्र देशान्तरात् पुरीषं पांसूनाहृत्य वेदिर्निर्मीयते सा आहार्यपुरीषा वेदिः ।

ततोऽध्वर्युः 'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि' इति ब्रह्माणमामन्त्रयेत । ततो ब्रह्मा[1] 'भूर्भुवःस्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओं३ परिगृह्णाण' इत्यतिसृजेत् । अध्वर्युरपि 'ऋतमसि' इति वेदेर्दक्षिणतः पूर्ववत् स्फ्येन रेखां कृत्वा 'ऋतसदनमसि' इति पश्चात् पूर्ववत् रेखां कृत्वा 'ऋतश्रीरसि' इत्युत्तरतः पूर्ववत् रेखां कुर्यात् । यजमानोऽपि पूर्ववत् 'यज्ञस्य त्वा' इति मन्त्रेण वेदिं परिगृह्यमाणामनुमन्त्रयेत । यत्राविहृते आहवनीयाग्नौ वेदिर्भवति तत्र मन्त्र[2]विपर्यासमेके इच्छन्ति । तदनु अध्वर्युः 'धा असि स्वधा असि'[3] इति स्फ्येन वेदिं प्रत्यगपवर्गां योयुप्य[4] 'उदादाय पृथिवीं जीरदानुः'[5] इति वेदिमनुवीक्ष्य पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा 'प्रोक्षणीरासादयेध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च सम्मृड्ढि, पत्नीं सन्नह्याज्येनोदेहि' इत्याग्नीध्राय सम्प्रैषं कुर्यात् । अत्र सम्प्रैषस्य परार्थत्वादाग्नीध्र एतानि कर्माणि कुर्यादित्यर्थो गम्यते । परप्रैषाभावादध्वर्युरेव एतानि कुर्यादित्यपरे अभिप्रयन्ति । भारद्वाजोऽपि एवमाह—'आग्नीध्र एतानि कर्माणि कुर्यादित्येकम् । अध्वर्युरित्यपरमि'ति[6] ।

---

1 आपस्तम्बब्रह्मा—'बृहस्पते परिगृह्णाण वेदिं स्वगा वो देवाः सदनानि सन्तु । तस्या बर्हिः प्रथतां साध्वन्तरहिंस्रा नः पृथिवी देव्यस्तु, देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि' इत्युपांशु जपमुक्त्वा उच्चैः ओं परिगृह्णाण' इत्यनुजानीयात् ।

2 'ऋतमसी'त्यादयः पूर्वं, 'वसवस्त्वा परिगृह्णन्तु' इत्यादयः पश्चात् । एवं मन्त्रविपर्यासो द्रष्टव्यः ।

3 'धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्' इति समग्रो मन्त्रः ।

4 निम्नोन्नतसमीकरणार्थं विघटय्य ।

5 'उदादाय पृथिवीं जीरदानुर्यामैरयन् चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते' इति समग्रो मन्त्रः ।

6 भा० श्रौ० २।३।३

### प्रोक्षण्यासादनम्

तत आग्नीध्रः प्रोक्षणीरभिपूर्य उदञ्चं स्फ्यमपोह्य, दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय 'ऋतसधः स्थः' इति यजमानस्य द्वेष्यं मनसा ध्यायन् स्फ्यस्य वर्त्मनि प्रोक्षणीरासादयेत् । आसादनानन्तरं यजमानः 'ईडेऽन्यक्रतूरहमपो देवीरुप ब्रुवे । दिवा नक्तञ्च सस्रुषोरपस्वरीः' इति प्रोक्षणीरासाद्यमाना अनुमन्त्रयेत । तत आग्नीध्रः 'शतभृष्टिरसि वानस्पत्यो द्विषतो वधः' इति द्वेष्यं मनसा ध्यायन् पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्य हस्ताववनिज्य स्फ्यस्याग्रमप्रतिमृशन् स्फ्यं प्रक्षाल्योत्तरेणाहवनीयं प्रागग्रं दक्षिणमिध्ममुत्तरं बर्हिरुपसादयेत् ।

### बर्हिरासादनम्

ततो यजमानः 'ऊर्णाम्रदु प्रथमानं स्योनं देवेभ्यो जुष्टं सदनाय बर्हिः । सुवर्गे लोके यजमानं हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्' इति बर्हिरासाद्यमानमनुमन्त्रयेत । अत्रैके स्रुक्सम्मार्जनात् पूर्वं पत्नीसन्नहनमिच्छन्ति, अपरे पुनः स्रुक्सम्मार्जनं पूर्वं ततः पत्नीसन्नहनमभिप्रयन्ति । तदनन्तरमाग्नीध्रः 'घृताचीरेताग्निर्वो ह्वयति देवयज्यायै' इति सस्रुवप्राशित्रा. स्रुच आदाय 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' इत्याहवनीये गार्हपत्ये वा ताः प्रतितप्य 'अनिशिताः स्थ सपत्नक्षयणीः' इति तप्ताः सप्राशित्राः स्रुचोऽभिमन्त्रयेत ।

### स्रुक्सम्मार्जनम्

ततो विभक्तैरविभक्तैर्वा वेदाग्रैः 'गोष्ठं मा निर्मृक्षम्'[1] इति प्राचीनमुदीचीनं वोत्तानं स्रुवं वेदाग्रैरन्तरतोऽभ्याकारं सर्वतोबिलमभिसमाहारं वेदाग्रमूलैर्दण्डं च सम्मृज्य 'वाचं प्राणम्'[2] इति प्राचीमुदीचीं वोत्तानां जुहूं

---

1 'गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहं सम्मार्जिमं' (तै० सं० १।१।१०।१) इति समग्रो मन्त्रः ।

2 'वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं सम्मार्जिमं' (तै० सं० १।१।१०।२) इति समग्रो मन्त्रः ।

वेदाग्राग्रैरन्तरतोऽभ्याकार प्राची, वेदाग्रमध्यैर्बाह्यतः प्रतीची, वेदाग्रमूलैर्दण्डं च सम्मृज्य 'चक्षुः श्रोत्रम्'[1] इत्युदीचीमेवोत्तानामुपभृत वेदाग्राग्रैरन्तरतोऽभ्याकारं प्रतीची, वेदाग्रमध्यैर्बाह्यतः प्राची, वेदाग्रमूलैर्दण्ड च सम्मृज्य 'प्रजां योनिम्'[2] इति स्रुववद् ध्रुवा सम्मृज्य 'रूप वर्णं पशूनां मा निर्मृक्ष वाजि त्वा सपत्नसाह् सम्मार्ज्मि' इति स्रुववत् प्राशित्रहरण सम्मृज्य, तूष्णी वा स्रुववदेव सम्मृज्याऽऽप्रयोगसमाप्तेः सम्मृष्टपात्राण्यसम्मृष्टपात्रैर्न संस्पर्शयेत्[3]। 'अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि' इति पुनः गात्राणि प्रतितप्य प्रोक्ष्याग्रेणोत्करं जघनेन वा दर्भेषु सादयित्वा स्रुक्सम्माजनान्यद्भिः सस्पृश्य 'दिवः शिल्पमवततं पृथिव्याः ककुभि श्रितम् । तेन वय सहस्रवल्शेन सपत्नं नाशयामास स्वाहा' इति यस्मिन्नग्नौ प्रतितपन तस्मिन्नग्नौ प्रहरेदुत्करे[4] वा निरस्येत् ।

पत्नीसन्नहनम्

तत आग्नीध्रो वेदमाज्यस्थाली योक्त्र[5] पवित्रे चादाय 'आशासाना सौमनसम्'[6] इत्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां तिष्ठन्ती वा पत्नी मौञ्जेन

1 'चक्षुः श्रोत्रं मा निर्मृक्ष वाजिनीं त्वा सपत्नसाहीं सम्मार्ज्मि (तै० स० १।१।१०।२) इति सम्पूर्णो मन्त्रः ।

2 'प्रजां योनि मा निर्मृक्षं वाजिनी त्वा सपत्नसाहीं सम्मार्ज्मि' (तै० स० १।१।१०।२) इति समग्रो मन्त्रः ।

3 यदि प्रमादात् संस्पर्शस्तदा पुनर्निष्टप्य सम्मार्जनमेव प्रायश्चित्तं भारद्वाजाभिमतम् । (भा० श्रौ० २।४।१०) आपस्तम्बमते त्वत्र सर्वप्रायश्चित्तं कर्त्तव्यमिति ।

4 प्रकृतौ नित्यमेव प्रहरणम्, विकृतौ तु प्रहरणमुत्करे त्यागो वेति विकल्पः। त्यागे स्वाहाकारो न कर्त्तव्य इति वृत्तिकाराभिप्रायः।

5 यजमानपत्न्याः कट्यां बन्धनाय मुञ्जतृणैर्निर्मिता रज्जुर्योक्त्रम्। यदा च याज्ञिका इमां गृह्णन्ति तदा योक्त्रं पवित्रे चादायेति वक्तव्यम् । यदा तु तां न गृह्णन्ति मौञ्जमेव दाम स्वीकुर्वन्ति तदा न, मौञ्जं दाम पवित्रे चादायेति वक्तव्यम् ।

6 'आशासाना सौमनसं प्रजा सौभाग्यं तनूम् । अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम्' (तै० सं० १।१।१०।१) इति समग्रो मन्त्रः।

दाम्नाऽन्यतरतः पाशेन योक्त्रेण वाऽभ्यन्तरं वाससः सन्नह्येत् । वाससोऽभिसन्नहनं न कर्त्तव्यमित्येके वदन्ति । अपरे पुनरभिसन्नहनं कर्त्तव्यतया विदधति । पत्नी तु उत्तरेण नाभिं शिखाकृतिं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थाय 'अग्ने गृहपत उप मा ह्वयस्व' इति गार्हपत्यमुपस्थाय 'देवानां पत्नीरुपमाह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीः' इत्यपरेण गार्हपत्यं देवपत्नीरुपस्थाय तस्माद्देशादपक्रम्य 'सुप्रजसस्त्वा वयम्'[1] इति दक्षिणत उदङ्मुखी उपविश्य 'इन्द्राणी वाऽविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय' इति जपेत् । ततो यजमानः 'युक्ता मे यज्ञमन्वासातै' इति पत्नीं सम्प्रेष्येत् ।

## आज्यावेक्षणम्

तदाग्नीध्रः 'पूषा ते बिलं विष्यतु' इति सर्पिर्धानस्य बिलमपावर्त्त्य दक्षिणाग्नावाज्यं विलाप्य 'अदितिरस्यच्छिद्रपत्रा' इत्याज्यस्थालीमादाय 'महीनां पयोऽस्योषधीनां रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्यायै' इति तस्यां पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य 'इद विष्णुर्विचक्रमे'[2] इति तद्दक्षिणाग्नावधिश्रित्य 'इषे त्वा' इति दक्षिणार्धे गार्हपत्यस्याधिश्रित्य 'ऊर्जे त्वा' इत्यपादाय भस्म प्रमृज्य वेदेनोपयम्य पत्न्या उपहरेत् । सा पत्नी तदाज्यमनुच्छ्वसन्ती नेत्रे निमील्य तूष्णीं वीक्ष्य 'महीनां पयोऽसि'[3] इति वीक्षेत । तत आग्नीध्रः 'तेजोऽसि' इत्युत्तरार्धे गार्हपत्य-

---

1 'सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्' (तै० सं० १।१।१०।१) इति समग्रो मन्त्रः ।

2 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे' (तै० सं० १।१।१०।३) इति समग्रो मन्त्र. ।

3 'महीनां पयोऽस्योषधीनां रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय' (तै० सं० १।१।१०।३) इति सम्पूर्णो मन्त्रः ।

स्याधिश्रित्य[1] 'तेजसे त्वा' इत्यपादाय वेदेन भस्म प्रमृज्य 'तेजोऽसि तेजोऽनुप्रेहि' इति हृत्वा 'अग्निस्ते तेजो मा विनैत्' इत्याहवनीयेऽधिश्रित्य वेदेन भस्म प्रमृज्य 'अग्नेर्जिह्वासि'[2] इति स्फ्यस्य वर्त्मनि सादयेत् ।

आज्यग्रहणम्

ततोऽध्वर्युयजमानौ तदाज्यं तूष्णीं निमील्य वीक्ष्यानुच्छ्वसन्तौ 'आज्यमसि सत्यमसि'[3] इत्याज्यमवेक्षेयाताम् । अनन्तरमध्वर्युः 'शुक्रमसि' इत्युदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं[4] प्रथममुत्पूय 'ज्योतिरसि' इति पूर्ववद् द्वितीयमुत्पूय 'तेजोऽसि' इति पूर्ववत्तृतीयमुत्पूय 'देवो वः सवितोत्पुनातु' इत्याज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीः प्रथममुत्पूय 'अच्छिद्रेण पवित्रेण' इति पूर्ववद् द्वितीयमुत्पूय 'वसोः सूर्यस्य रश्मिभिः' इति पूर्ववत्तृतीयमुत्पुनीयात् । यजमानश्च 'अद्भिराज्यमाज्येनापः सम्यक् पुनीत सवितुः पवित्रैः । ता देवीः शक्वरीः शाक्वरेणेम यज्ञमवत संविदानाः' इत्याज्यं प्रोक्षणीश्चोत्पूयमाना अभिमन्त्रयेत । अभिमन्त्रणात् परमध्वर्युः 'शुक्रं त्वा शुक्रायाम्'[5] इत्याज्यस्थाल्या बिलेन समं जुह्वा बिलं धारयमाणो

---

1 अनालम्भुकत्वादिना पत्न्यामसन्निहितायां गार्हपत्यस्योत्तरार्धाधिश्रयणमपादानं च लुप्यते, तदीक्षणाभावात् । तदा योक्त्र मौञ्ज दाम वा स्वकाले दक्षिणतःपाशमुदक्शुल्वं पश्चाद्वेदेरन्तर्वेदि वा तूष्णीं निदध्यात् ।

2 'अग्नेर्जिह्वासि सुभूर्देवाना धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव' (तै० सं० १।१।१०।३) इति समग्रो मन्त्रः ।

3 'आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मं सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्व पृतना. सहस्व पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीय' (तै० सं० १।६।१) इति समग्रो मन्त्रः ।

4 पुरतः आरभ्य पश्चात् कृत्वा पुरतः समाप्तिः, एवं त्रिः ।

5 'शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' 'ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' 'अर्चिस्त्वार्चिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' इति त्रीणि यजूंषि ।

जुहूं वेदेनोपयम्य, अनिष्कासिना[1] स्रुवेनान्तर्वेद्याज्यं भूयो जुह्वां प्रथमं गृहीत्वा 'ज्योतिस्त्वा' इति पूर्ववद् द्वितीयमाज्यं जुह्वां गृहीत्वा 'अर्चिस्त्वा' इति पूर्ववत्तृतीयमाज्यं जुह्वां गृहीत्वा 'पञ्चानां त्वा वातानाम्'[2] इति पूर्ववच्चतुर्थं जुह्वां गृहीत्वा 'पञ्चानां त्वर्तूनाम्' इति पञ्चावत्तिनो यजमानस्य कृते पूर्ववत् पञ्चम गृहीत्वा विहारसमीप आसादयेत् । चतुरवत्ती यजमानश्चतुर आज्यग्रहणमन्त्रानध्वर्युणा सह जपेत् । पञ्चावत्ती चेत् पञ्चाऽऽज्यग्रहणमन्त्रानध्वर्युणा सह जपेत् । अत्राध्वर्युयजमानावुभावपि चातुःस्वर्येणैव जपतः । तत्राध्वर्युराज्यग्रहणमन्त्र चातुःस्वर्येण जपित्वाऽऽज्यं गृह्णीयात् ।

ततोऽध्वर्युः 'पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि' इत्याज्यस्थाल्या मध्यदेश उपभृत धारयमाण उपभृतं वेदेनोपयम्य अनिष्कासिना स्रुवेणान्तर्वेद्याज्यमल्पीय उपभृति प्रथमं गृहीत्वा 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि' इति पूर्ववदुपभृति द्वितीयं गृहीत्वा 'पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि' इति पूर्ववदुपभृति तृतीयं गृहीत्वा 'पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि' इति पूर्ववदुपभृति चतुर्थं गृहीत्वा 'चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि' इति पूर्ववदुपभृति पञ्चमं[3] गृहीत्वा 'ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि' इति पूर्ववदुपभृति षष्ठं गृहीत्वा 'क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि' इति पूर्ववदुपभृति सप्तमं गृहीत्वा 'विशे त्वा यन्त्राय धर्त्राय गृह्णामि' इति पूर्ववदुपभृति अष्टमं गृहीत्वा विहारसमीप आसादयेत् । ततो यजमानः अध्वर्युणा सहेमानाज्यग्रहणमन्त्राञ्जपेत् । अध्वर्युस्तु पूर्ववदेव चातुःस्वर्येणैव मन्त्रानुक्त्वाऽऽज्यं गृह्णीयात् ।

तदनन्तरमध्वर्युः 'सुप्रजास्त्वाय त्वा गृह्णामि' इति वेदेन सहाज्यस्थाल्या उत्तरतो भूमौ प्रतिष्ठितायां ध्रुवायामन्तर्वेदि भूयिष्ठमाज्यमनिष्कासिना

---

1 निष्कास. शेषः । अनिष्कासिना शेषरहितेनेत्यर्थः ।

2 'पञ्चाना त्वा वाताना यन्त्राय धर्त्राय गृह्णामि ॥ पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि ॥ इति द्वे यजुषी ।

3 'धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामि' इति पञ्चावत्तिनो यजमानस्य वि षः ।

स्रुवेण प्रथमं गृहीत्वा 'रायस्पोषाय त्वा गृह्णामि' इति पूर्ववद् ध्रुवायामाज्यं द्वितीयं गृहीत्वा 'ब्रह्मवर्चसाय त्वा गृह्णामि' इति पूर्ववद् ध्रुवायामाज्यं तृतीयं गृहीत्वा 'भूरस्माकं हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामि' इति पूर्ववद् ध्रुवायामाज्य चतुर्गृहीतं गृहीत्वा[1] विहारसमीप आसादयेत् । चतुर्गृहीतप्रभृतीन्येतान्याज्यानि उत्करे नासादयेत् । अन्तर्वेदि गृहीतं ध्रुवागतमाज्यं न पश्चाद्धरेत् । अत्र यजमान अध्वर्युणा सहेमानाज्यग्रहणमन्त्राञ्जपेत् । अध्वर्युस्तु प्राग्वदेव तान् चातुस्वर्येणैव ब्रूयात् ।

वेद्यादीना प्रोक्षणम्

ततोऽध्वर्युः 'आपो देवीरग्रे पुवः' इति पूर्ववत् प्रोक्षणीरभिमन्त्र्य 'ब्रह्मन् प्रोक्षिष्यामि' इति ब्रह्माणमामन्त्रयेत । ब्रह्माऽपि[2] 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओं३ प्रोक्ष' इत्यतिसृजेत् । एवं लब्धानुज्ञोऽध्वर्युः इध्मं विस्रस्य 'कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा' इति सकृन्मन्त्रेण द्विस्तूष्णीमिध्मं प्रोक्ष्य 'वेदिरसि बर्हिषे त्वा स्वाहा' इति सकृन्मन्त्रेण द्विस्तूष्णी वेदिं प्रोक्ष्य 'बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा' इति सकृन्मन्त्रेण द्विस्तूष्णी बर्हिः प्रोक्ष्यान्तर्वेदि पुरोग्रन्थि ऊर्ध्वाग्रं बर्हिरासादयेत् । ततो यजमानः 'अशिश्रेम बर्हिरन्तः पृथिव्यां सं रोहयन्त ओषधीर्विवृक्ण । यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु । सुमनसो यजमानाय सन्त्वोषधीराप इह शक्वरीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा अदब्धाः' इत्यन्तर्वेदि बर्हिरासन्नमनुमन्त्रयेत । अध्वर्युरपि 'दिवे त्वा' इत्यासन्नबर्हिषोऽग्रं प्रोक्ष्य 'अन्तरिक्षाय त्वा' इति मध्य प्रोक्ष्य 'पृथिव्यै त्वा' इति मूलं प्रोक्ष्य, स्रुच्यग्राणि मूलानि च क्लेदयित्वा 'पोषाय त्वा' इति

---

1 पञ्चावत्तिनो यजमानस्य 'कामाय त्वा गृह्णामि' इति पूर्ववद् ध्रुवायामाज्यं पञ्चम गृहीत्वा विहारसमीप आसादयेत् ।

2 आपस्तम्बब्रह्मा तु 'प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणा सुकृतां यत्र लोकस्तत्रेमं यज्ञ यजमानं च धेहि' इत्युपांशु जपमुक्त्वोच्चैः 'ओं प्रोक्ष' इत्यनुजानीयात् ।

स्रुग्बिलाग्रयोरुपरिन्यस्तन्युब्जहस्तेन प्रत्यगपवर्गं ग्रन्थिं प्रत्युक्षेत् । ततोऽध्वर्युः प्राचीनावीती भूत्वा 'स्वधा पितृभ्यः' इति प्रोक्षणीशेषं दक्षिणायै श्रोणेरुत्तरस्याः सन्ततं निनीय यज्ञोपवीती भूत्वाऽप उपस्पृशेत् ।

## बर्हिरास्तरणम्

तदनन्तर 'पूषा ते ग्रन्थिं विष्यतु' इति पुरस्तात्प्रत्यञ्चमुपगूढं ग्रन्थिं प्रागपवर्गं विस्रस्य[1] 'विष्णोः स्तूपोऽसि' इति प्रस्तरमाहवनोयं प्रति बर्हिषः सकाशात् कर्षन्निव शनैरपादाय[2] 'अयं प्राणश्चापानश्च यजमानमपि गच्छताम् । यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामि' इति तस्मिन् प्रस्तरे पवित्रे अपिसृज्य 'प्राणापानाभ्यां त्वा सतनुं करोमि' इत्यग्रेणाऽऽहवनीयं प्रस्तरमाहृत्य यजमानाय प्रयच्छेत् । यजमानो ब्रह्मणे प्रयच्छेत् । ब्रह्मा प्रस्तरं धारयेत् । स्वयमेव वा यजमानः प्रस्तर धारयेन्न ब्रह्मणे प्रयच्छेत् । ततोऽध्वर्युः परिभोजनीयदर्भैर्वेदिमन्तर्धाय दक्षिणतः सन्नहन शुल्बं प्राचीनं प्रागुदीचोनं वा निधाय 'ऊर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः'[3] इति बहुलमनतिदृश्यं[4] प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु[5] पञ्चधातु वाऽग्रैर्मूलान्यभिच्छादयन् धातौ धातौ मन्त्रमावर्तयन् बर्हिषा वेदिं स्तृणीयात् । यजमानोऽपि 'चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि स्योना चै मे सुषदा चैधि ।

---

1 यदि सन्नहनकाले पश्चात् प्रागुपगूढो ग्रन्थिस्तदा तं पुच्छे गृहीत्वा पश्चादाकृष्य विस्रसन कुर्यात् ।

2 प्रस्तरस्य शनैरपादानं सूत्रयता आपस्तम्बाचार्येण प्रस्तरस्यैतस्तत करणं निन्दितम् । तदा प्रस्तरस्योत्क्षेपण प्रकर्षेण पुरस्ताद्धरण प्रतीचीनहरण-मितस्ततश्चालनमन्येन हस्तेन अग्रादारभ्य मूलपर्यन्त मूलादारभ्य अग्रपर्यन्त च स्पर्शन सर्वं निषिद्धम् ।

3 तै० सं० १।१।११।१

4 यथा वेदेर्भूभागो न दृश्येत तथा स्तरितव्यम् ।

5 धातवः शलाकाः । त्रिवार पञ्चवारं वावृत्ताभिर्दर्भशलाकाभिर्वेदिं स्तृणु-यादित्यर्थः ।

ऊर्जस्वती च मे पयस्वती चैधि इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व । क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व प्रजां पशून् मे पिन्वस्व' इत्यास्तीर्यमाणां वेदिमनुमन्त्रयेत ।

परिधिपरिधानम्

ततोऽध्वर्युः प्रस्तरपाणिः 'गन्धर्वोऽसि विश्वावसुः'[1] इत्युदगग्रमन्योन्यसस्पृष्टं मध्यमं परिधिं परिदध्यात् । यजमानोऽपि 'ध्रुवोऽसि'[2] इति परिधीयमानं मध्यमं परिधिमनुमन्त्रयेत । तदनन्तरम् 'इन्द्रस्य बाहुरसि' इति प्रागग्रमन्योन्यसंस्पृष्टं दक्षिणं परिधिं परिदध्यात् । अत्रापि यजमानः 'उग्रोऽसि' इति मन्त्रेण परिधीयमानं दक्षिणं परिधिमनुमन्त्रयेत । ततः 'मित्रावरुणौ त्वा' इति प्रागग्रमन्योन्यसंस्पृष्टमुत्तरं परिधिं परिदध्यात् । यजमानोऽपि 'अभिभूरसि' इति परिधीयमानमुत्तरं परिधिमनुमन्त्र्य 'अस्मिन् यज्ञ उपभूय इन्नु मेऽविक्षोभाय परिधीन् दधामि । धर्ता धरुणो धरीयानग्निर्द्वेषांसि निरितो नुदातै' इत्यनया सकृदन्ते सर्वान् परिधीननुमन्त्रयेत ।

अग्निप्रज्वालनम्

ततोऽध्वर्युः 'सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः' इत्याहवनीयमभिमन्त्र्योपर्याहवनीये प्रस्तरं धारयन्नग्निं काष्ठैर्बलवन्तं कुर्यात् । यजमानश्च 'युनज्मि त्वा ब्रह्मणा दैव्येन'[3] 'तेजिष्ठा ते तपना या च रोचना

---

1 'गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित' । इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडित. ।
मित्रावरुणौ त्वोत्तरत परिधत्ता ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः' इति त्रयो मन्त्रा.। (तै० स० १।१।११।१)

2 'ध्रुवोऽसि ध्रुवोऽहं सजातेषु भूयासं धीरश्चेत्ता वसुवित् । उग्रोऽस्युग्रोऽहं सजातेषु भूयासमुग्रश्चेत्ता वसुवित् । अभिभूरस्यभिभूरहं सजातेषु भूयासमभिभूश्चेत्ता वसुवित्' इति मन्त्रा· (तै० स० १।६।२)

3 'युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेद· । इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वय ते । यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो । तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे' (तै० स० १।६।२।१) इति समग्रो मन्त्रः ।

प्रत्योषन्तीस्तन्वो यास्ते अग्ने। ताभिर्वर्मण्यभितो व्ययस्व मा त्वा दभन् यज्ञहनः पिशाचाः' इति चाहवनीयमनुमन्त्रयेत ।

## आघारसमिदाधानम्

तदनन्तरमध्वर्युराघारसमिधौ गृहीत्वा 'वीतिहोत्रं त्वा कवे'[1] इति दक्षिणामाघारसमिधं पूर्वाघारसमाप्तिप्रदेश ऊर्ध्वाग्रामाधाय 'समिदस्यायुषे त्वा' इति मन्त्रेण तूष्णीं[2] वोत्तरामाघारसमिधमुत्तराघारसमाप्तिप्रदेश ऊर्ध्वाग्रामादध्यात् ।

## प्रस्तरास्तरणम्

तदनु समावनन्तर्गर्भौ[3] दर्भौ विधृतित्वेन कल्पयित्वा 'विशो यन्त्रे स्थः' इत्यन्तर्वेद्युदगग्रे ते विधृती[4] निदध्यात्। ततो यजमानः 'विच्छिनद्मि विधृतीभ्यां सपत्नाञ्जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। विशो यन्त्राभ्यां विधमाम्येनानहं स्वानामुत्तमोऽसानि देवाः ॥ विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम्। सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती। प्राणान्मयि धारयतं प्रजां मयि धारयतं पशून् मयि धारयतम्' इति विधृती आसाद्यमाने अनुमन्त्रयेत। तदनु 'वसूनां रुद्राणामादित्यानां सदसि सीद' इति तयोर्विधृत्योरुपरि प्रस्तरं स्थापयेत्।[5] ततो यजमानः 'अयं प्रस्तर उभयस्य धर्त्ता, धर्त्ता प्रयाजानामुतानूयाजानाम्। स दाधार समिधो विश्वरूपाम्तस्मिन् स्रुचो अध्यासादयामि' इति प्रस्तरमासाद्यमानमनुमन्त्रयेत ।

---

1 'वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमह्यग्ने बृहन्तमध्वरे' इति समग्रो मन्त्र.।

2 भारद्वाजस्तु उत्तरामाघारसमिधं तूष्णीमादध्यादित्यभिप्रैति। (भा० श्रौ० २।१२।८)

3 यस्य दर्भस्य मध्ये दर्भान्तरं नास्ति सोऽनन्तर्गर्भ.।

4 प्रस्तरदर्भाणा पुन.सुखेन ग्रहणाय यौ दर्भावास्तीर्येते तौ विधृती भवतः।

5 यत्र धातौ प्रस्तरः साद्यते तद्बर्हिर्मूलेभ्यः प्रस्तरमूलानि आहवनीयाभिमुखं पुरस्ताद्धृतानि भवन्ति ।

### हविरासादनम्

तदनन्तरमध्वर्युः 'जुहूरसि घृताची'[1] इति तस्मिन् प्रस्तरे प्रागग्रां परस्परमसंस्पृष्टां जुहू सादयेत्। आसादनात् पर यजमानः 'आरोह पथो जुहु देवयानान् यत्रर्षयः प्रथमजा ये पुराणाः। हिरण्यपक्षाजिरा सम्भृताङ्गा वहासि मा सुकृतां यत्र लोकाः॥ जुहूरसि घृताची गायत्रियाग्नी कविभिर्जुषाणा। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानाग्नेयेन शर्मणा दैव्येन' इति जुहूमासाद्यमानामनुमन्त्रयेत।

ततः 'उपभृदसि घृताची'[2] इत्युत्तरेण जुहू प्रागग्रामसंस्पृष्टां विधृत्योरधस्तात् प्रतिकृष्टतरामुपभृतं प्रस्तरे सादयेत्। तदनन्तरम् 'अवाहं बाध उपभृता सपत्नाञ्जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। दोहै यज्ञ सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः॥ सुभृदस्युपभृद्घृताची त्रैष्टुभेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनु यच्छस्व सुनीती यज्ञं नयास्युप देवानैन्द्रेण शर्मणा दैव्यन' इत्युपभृतमासाद्यमानामनुमन्त्रयेत। ततोऽध्वर्युः 'ध्रुवाऽसि घृताची'[3] इति प्रस्तर उत्तरेणोपभृतं प्रागग्रामसंस्पृष्टां विधृत्योरुपरिष्टात् प्रतिकृष्टतरां ध्रुवामासादयेत्। आसादनानन्तरं यजमानः 'यो मा वाचा मनसा दुर्मरायुर्ह् दारातीयादभिदासदग्ने। इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः। ध्रुवाऽसि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनु यच्छस्व सुनीती यज्ञं नयास्युप देवान् वैश्वदेवेन शर्मणा दैव्येन' इति ध्रुवामासाद्यमानामनुमन्त्रयेत।

ततोऽध्वर्युः 'ऋषभोऽसि शाक्वरो घृताचीनां सूनुः। प्रियेण नाम्ना प्रिये सदसि सीद' इति दक्षिणेन जुहूमुत्तरेण वा, उत्तरेण वा ध्रुवां स्रुवं सादयेत्। सादनात् पर यजमानः 'स्योनो मे सीद सुषदः

---

1 'जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद' इति समग्रो मन्त्रः।

2 'उपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद' इति समग्रो मन्त्रः।

3 'ध्रुवाऽसि घृताची नाम्ना प्रियेण प्रिये सदसि सीद' इति समग्रो मन्त्रः।

पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके । दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः । अय स्रुवो अभिजिहर्ति होमाञ्छतक्षरश्छन्दसाऽनुष्टुभेन । स्रुवा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्यन शर्मणा दैव्येन' इति स्रुवमासाद्यमानमनुमन्त्रयेत ।

ततोऽध्वर्युः पूर्वस्थापितस्थले तूष्णीमाज्यस्थालीमासादयेत् । यजमानोऽपि 'इय स्थाली घृतस्य पूर्णाऽच्छिन्नपयाः शतधार उत्सः । मारुतेन शर्मणा दैव्येन' इत्याज्यस्थालीमासाद्यमानामनुमन्त्रयेत । तदनन्तरमध्वर्युः 'एता असदन्'[1] इति स्रुचोऽभिमन्त्र्य 'विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानि' इति स्रुग्गतान्याज्यान्यभिमन्त्र्य वेदमाज्यस्थाली पात्री स्रुव चादाय 'इदमहं सेनाया अभीत्वर्यै मुखमपोहामि'[2] इति वेदेन कपालवत् पुरोडाशादङ्गारानपोह्य 'सूर्यज्योतिर्विभाहि महत इन्द्रियाय'[3] इति पुरोडाशमभिमन्त्र्य 'आप्यायता घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदम् । पशूनां तेजसाऽग्नये जुष्टमभिघारयामि' इत्याग्नेय पुरोडाशमभिघार्य[4] 'यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान् सोम घृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्द यजमानाय मह्यम्' इति प्रातर्दोहमभिघार्य तूष्णीं सायदोहमभिघार्य[5] 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि ते' इति पात्र्यामुपस्तीर्य 'आर्द्रः

---

1 'एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञ पाहि यज्ञपति पाहि मा यज्ञनियम' (तै० स० १।१।११।२) इति समग्रो मन्त्रः ।

2 'इदमहं सेनाया अभीत्वर्यै' इति मन्त्रेण पुरोडाशादङ्गारापोहनं कर्त्तव्यम् । अय मन्त्रः प्रतिपुरोडाशमावर्तनीयः । पौणमास्याममावास्यायामय समान एव ।

3 सूर्यो ज्योतिरिति मन्त्र प्रतिपुरोडाशमावर्तयेत् पौर्णमास्याममावास्यायाञ्च ।

4 पौर्णमास्यां तूष्णीमग्नीषोमीयमैन्द्रं वैमृधं पुरोडाशमभिघारयेत् । अमावास्यायामाग्नेयमाप्यायतामिति मन्त्रेणाभिघार्य तूष्णीमैन्द्राग्नमभिघारयेत् ।

5 यस्त आत्मेत्यादिसायदोहाभिघारणान्त कर्म पौर्णमास्या नास्ति सान्नाय्याभावात् । असन्नयतोऽमावास्यायामपि तन्नास्ति सान्नाय्याभावादेव ।

प्रथस्नुभु वनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम्' इत्यपर्यावर्तयन् पुरोडाशमुद्वास्य वेदेन भस्म प्रमृज्य 'तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति पात्र्यां प्रतिष्ठाप्य[1] हस्तं प्रक्षाल्य 'दृंह गा दृंह गोपतिं मा वो यज्ञपती रिषत्' इत्युदक् प्रातर्दोहमुद्वास्य[2] 'इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्' इति स्रुवगृहीतेनाज्येन कपालानि प्रत्यज्य[3] 'देवस्त्वा सविता मध्वानक्तु' इति स्रुवगृहीतेनाज्येन पुरोडाशमङ्क्त्वोपरिष्टात् पुरोडाशस्याधस्तादञ्जनमाज्याक्तेन हस्तेन कुर्यात्।[4] ततो यजमानः 'तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन । तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण । तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिः' इति पुरोडाशमज्यमानमनुमन्त्रयेत । अञ्जनावसरे क्वचित् क्वचिदनक्तः पुरोडाशः करणीयः । विच्छेदनिकषणौ यथा न भवतस्तथा अञ्जीत ।

## हविरभिमर्शनम्

ततोऽध्वर्युः पञ्चहोतृमन्त्रेण[5] पौर्णमास्यं हविरासाद्य अपरेण स्रुचः पुरोडाशम्, स्रुचामुत्तरतो दोहौ[6], पुरोडाशस्योत्तरतो हस्ते वा कुम्भ्यौ

---

1 स्योन त इत्यादिप्रतिष्ठापनान्तमग्नीषोमीयस्य वैमृधस्य च कार्यम् । असन्नयतोऽमावास्यायामाग्नेयवदैन्द्राग्नस्य स्योनं त इत्यादिप्रतिष्ठापनान्त कार्यम् । यवमयश्चेत् पुरोडाशस्तं तूष्णी प्रतिष्ठापयेत् ।

2 पौर्णमास्यामसन्नयतोऽमावास्यायां च प्रातर्दोहोद्वासन नास्ति सान्नाय्याभावात् ।

3 इरा भूतिरिति मन्त्रं प्रतिकपालयोगमावर्तयेत् पौर्णमास्याममावास्याया च ।

4 पौर्णमास्यामसन्नयतोऽमावास्याया च 'देवस्त्वा सविता' इति मन्त्र प्रतिपुरोडाशमावर्तयेत् ।

5 'अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता' (तै० आ० ३।१) इति पञ्चहोतृमन्त्रः । अयमेव मन्त्रोऽसन्नयतोऽमावास्यायां पुरोडाशासादनकाले पठनीयः । पौर्णमास्या 'पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता' (तै० आ० ३।१) इति चतुर्होतृमन्त्रेणापरेण स्रुच. पुरोडाशानासादयेत् ।

6 पौर्णमास्यामसन्नयतोऽमावास्याया च दोहासादनं नास्ति सान्नाय्याभावात् ।

धृत्वा वेदिमध्ये पूर्वं शृतमपरं दधि संश्लिष्यानन्तर विभज्य दक्षिणस्यां श्रोण्यां शृतमुत्तरस्यां दधि आसादयेत् ।[1] आसादनात् परं यजमानः 'यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्र्यताम् । शत मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः । प्रजापतिरसि सर्वतः श्रितः सर्वतो मां भूत भविष्यच्छ्र्यताम् । शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः' इत्याग्नेयं पुरोडाशमासन्नमभिमृश्य[2] 'इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवो चिकित्सन् । तेन देवा अवतोप मामिहेषमूर्जं यशः सह ओजः सनेयं शृतं मयि श्रयताम्' इत्यासन्नं प्रातर्दोहमभिमृश्य 'यत् पृथिवीमचरत्तत् प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोतु' इत्यासन्नं दध्यभिमृश्य 'अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याम्' इति सर्वाणि

---

1 आसादनप्रकारश्चेत्थम्—सकृन्मन्त्रमुक्त्वा सर्वेषां हविषामासादनासम्भवे प्रतिहविर्द्रव्यं मन्त्रमावर्त्य आसादयेत् । तथैकेन दक्षिणेन हस्तेनासादनासम्भवे हस्तद्वयेनासादयेत् । 'कर्मणे वां देवेभ्यः शकेयमि'ति मन्त्रलिङ्गात् ।

2 पौर्णमास्यामसन्नयतोऽमावास्यायां चाग्नेयपुरोडाशाभिमर्शनानन्तरम्—'अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याम्' इति सर्वाणि हवींष्यभिमृश्य 'यो नः कनीय इह कामयाता अस्मिन् यज्ञे यजमानाय मह्यम् । अपतमिन्द्रो वैमृधो भुवनान्नुदतामहं प्रजां वीरवतीं विदेय' इत्यैन्द्रवैमृधमभिमृश्य 'ममाग्ने वर्चः' इत्यनुवाके 'पृथिवी होता । द्यौरध्वर्युः । मित्रोऽग्नीत् । बृहस्पतिरुपवक्ता' ( तै० आ० ३।२ ) इति चतुर्होतृमन्त्रेण सर्वाणि हवींष्यासन्नान्यभिमृशेत् । असन्नयतोऽमावास्यायाममृतत्वमश्यामित्यस्यानन्तरं 'यो नः कनीय इह कामयाता अस्मिन् यज्ञे यजमानाय मह्यम् । अपतमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेय' इत्यैन्द्राग्नमभिमृश्य 'ममाग्ने वर्चः' इत्यनुवाकेन पञ्चहोतृमन्त्रेण च सर्वाणि हवींष्यासन्नान्यभिमृशेत् ।

हवीष्यभिमृश्य 'ममाग्ने वर्चो विहवेष्वस्तु' [1]इत्यनुवाकेन पञ्चहोतृ[2]मन्त्रेण च अमावास्याया सर्वाण्यासन्नानि हवीष्यभिमृशेत् । ततोऽध्वर्युः 'अयं वेदः पृथिवीमन्वविन्दद् गुहासती गहने गह्वरेषु । स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु' इत्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय वेद्यन्तान् परिस्तीर्य होतृषदनमुत्तरश्रोणिसमीपे परिभोजनीयदर्भं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्येत ।

## सामिधेनीकर्म

ततः सामिधेन्यर्थमिध्माधानादि प्रक्रम्याध्वर्युः 'होतरेहि' इति होतारमामन्त्रयेत । एवमामन्त्रितो होता तीर्थेन वेदिदेशमागच्छेत्[3] । तत्र होता प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृङ्क्त्वा पूर्वेणोत्करमपरेण प्रणीता यो देशस्तेन विहारं प्रपद्याभिहृततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य सहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसम्मितावङ्कसम्मितौ वा द्यावापृथिव्योः सन्धिमीक्षमाणस्तिष्ठेत् । ततोऽध्वर्युः 'अग्नये समिध्यमानायानुब्रू३हि' 'समिध्यमानायानुब्रू३हि' इति वा होतारं सम्प्रेष्य होत्रा सामिधेनीषूच्यमानासु प्रणवे प्रणवे समिधमाधाय 'समिद्धो अग्न आहुत' इति ज्ञात्वा एकामनूयाजसमिधमवशेष्य सर्वमिध्मशेष-

---

1 तै० सं० ४।८।१४

2 पञ्चहोतृमन्त्रः पूर्वमेव निर्दिष्टः ।

3 'अग्नये समिध्यमानाय' इति प्रैषस्य सामिधेन्यङ्गत्वात् सामिधेनीस्वर एव प्रयोज्यः ।

ाभ्यादध्यात् परिधा[1]नीयायां वा । यजमानोऽपि सामिधेनीनां पुरस्तात् दशहोतृ[2]मन्त्रमुक्त्वा सामिधेनीनां प्रथमर्गारम्भे 'अङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकैरवन्तु' इति जपित्वा सामिधेनीषूच्यमानासु पूर्वोक्तं दशहोतारं व्याख्याय 'उच्छुष्मो अग्ने'[3] इति समिध्यमानशब्दवत्यर्चा समिध्यमानमग्निमनुमन्त्र्य 'समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः स्वगा देवेभ्य इदं नमः' इति समिद्धशब्दवत्यर्चा समिद्धमग्निमनुमन्त्रयेत । ततो होता 'नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च वाक्समस्थितयज्ञः साधु च्छन्दांसि प्रपद्येऽहमेव मां देवदत्त[4]-शर्माणम्' इति स्वं नामाऽऽदिश्य 'भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वह' इत्यङ्गुल्यग्राण्यवकृष्य 'जातवेदो रमया पशून् मयि' इति तानि प्रतिसन्धाय 'वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मसीय येनासुराँ अभिदेवा असाम । ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्' इति जपि[5]त्वा

1 परिधानीया अन्तिमा ऋक् । 'सर्वत्रोत्तमां परिधानीयेति विद्यात्' ( आ० श्रौ० २।१६।८ ) इत्याश्वलायनः । 'आजुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनम्' (ऋ० स० ५।२८।६) इति ऋक् ।

2 'चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीत बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः ॥' (तै० आ० ३।१।१) इति दशहोतृमन्त्रः ।

3 'उच्छुष्मो अग्ने यजमानायैधि नि शुष्मो अभि दासते । अग्ने देवेद्धमन्विद्ध मन्द्रजिह्वामर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इति समग्रो मन्त्रः ।

4 देवदत्तशर्माणमित्यत्र होता स्वं नाम निर्दिशेत् ।

5 हिमित्युच्चैः स्वरेण हिंकृत्य 'भूर्भुव.स्वरो३म्' इत्युपांशु जपति । अस्य हिंकारसहितस्य जपस्याभिहिंकार इति संज्ञा सूत्रकारेण विधीयते । कौत्सस्तु भूर्भुवःस्वरित्येवाह । अभिहिंकारपूर्वजपं तु नेच्छति ।

'हि३म्' इत्युच्चैर्हिंकृत्य 'भूर्भुवः स्वरो३म्'[1] इत्युपांशु जपित्वा [2]'प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या।देवाञ्जिगाति सुम्नयो३म्, प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयो३म् प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयो-३मग्न आयाहि वीतये गृणानो हव्यदातये, नि होता सत्सि बर्हिषो३ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्यो३ स नः पृथु श्रवाय्यमच्छा देव विवाससि। बृहदग्ने सुवीर्यो३मीळेऽन्यो नमस्य-स्तिरस्तमांसि दर्शतः, समग्निरिध्यते वृषो३ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः, तं हविष्मन्त ईळतो३वृषणं त्वा वयं वृषन् वृषणः समिधीमहि, अग्ने दीद्यतं बृहो३मग्निं दूतं वृणीमहे होतारं विश्व-वेदसम्। अस्य यज्ञस्य सुक्रतो३, [3]समिध्यमानो अध्वरेऽग्निः पावक ईड्यः। शोचिष्केशस्तमीमहो३ [4]समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर। त्वं हि हव्यवाळसो३माजुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनो३माजुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनो-३माजुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनो३मग्ने महाँ असि ब्राह्मणभारत' इति निगदेऽवसाय, 'यजमानस्यार्षेयान् प्रवृणीते यावन्तः

---

1 'जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु' 'मन्त्राश्च कर्मकरणाः' (आ० श्रौ० १।१।२०-२१) इत्याश्वलायनः।

2 आश्वलायनीयानां (१) सामिधेनीरारभ्य प्रयाजसमाप्तिपर्यन्तं मन्द्रः स्वरः (२) आज्यभागावारभ्य स्विष्टकृत्पर्यन्तं स्विष्टकृत्समाप्तिपर्यन्तं वा मध्यमः स्वरः (३) स्विष्टकृतमारभ्य स्विष्टकृत्समाप्त्यनन्तरं वा शंयुवाकसमाप्ति-पर्यन्तमुत्तमः स्वरः (४) शंयुवाकादूर्ध्वं हौत्रसमाप्तिपर्यन्तं मन्द्रः स्वरः। आपस्तम्बीयानां पुनः (१) सामिधेनीषु मध्यमः स्वरः (२) ततः प्रागाज्य-भागाभ्यां मन्द्रः स्वरः (३) प्राक् स्विष्टकृतो मध्यमः स्वरः (४) स्विष्ट-कृतमारभ्य शंयुवाकसमाप्तिपर्यन्त क्रुष्टः स्वरः (५) पत्नीसंयाजे ध्वान उपांशुर्वा स्वरः।

3 अस्त्यत्र यजमानकर्तृकमनुमन्त्रणम्।

4 अस्त्यत्राध्वर्युकर्तृकं समिदाधानं यजमानकर्तृकमनुमन्त्रणं च।

स्युः परं परं प्रथमम्' इति सूत्रानुसारं काश्यपावत्सारासित इत्यवसाय समापयेत् । ततो यजमानः 'देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे । यस्यास्मि न तमन्तरेमि । स्वं म इष्टं स्वं दत्तं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोता आदित्योऽनुख्याता । द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः । य एवास्मि स सन् यजे' इति होत्रा यजमानप्रवरे प्रव्रियमाणे जपेत् ।

## निगदपाठः

तदनन्तरं होता 'देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाट्' इत्यवसाय वर्त्तेत ।

## प्रथमाघारः

ततोऽध्वर्युः वेदेनाग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरं परिधिसन्धिमन्ववहृत्य 'प्रजापतये' इति प्रजापतिं मनसा ध्यायन् 'स्वाहा' इत्युच्चारयन् दक्षिणाप्राञ्चमृजुं सन्ततं ज्योतिष्मति ज्वलत्यग्नावाघारमाघारयेत्, सर्वाणीध्मकाष्ठानि संस्पर्शयेच्च । अत्राघारयोरेतान् विकल्पान् ब्राह्मणमुपदिशति । ऋजू प्राञ्चौ तावाघारौ कर्त्तव्यावित्येकः कल्पः । तिर्यञ्चौ मिथो व्यतिषक्ताविति द्वितीयः । तावेवाव्यतिषक्तावृजू इति तृतीयः । ततो यजमानः 'मनोऽसि प्राजापत्यम्'[1] इति स्रौवमाघारमाघार्यमाणमनुमन्त्र्य 'प्रजापतये इदं न मम' इति त्यागं कुर्यात् ।

---

1 'मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश' इति समग्रो मन्त्रः

### अग्निसम्मार्जनम्

ततोऽध्वर्युः 'आप्यायतां ध्रुवा घृतेन'[1] इति स्रुवेणाऽऽज्यस्थाल्याः सकाशादाज्यमादाय ध्रुवामाप्याय्य 'अग्नीत् परिधींश्चाग्निं च त्रिस्त्रिः सम्मृड्ढी'ति आग्नीध्रं प्रति सम्प्रैषं कुर्यात्। तत आग्नीध्रः स्फ्यसहितैरिध्मसन्नहनैः स्फ्यरहितैरिध्मसन्नहनैर्वाऽनुपरि[2]-क्रामं परिधीन् यथा[3]परिधितमन्वग्रं त्रिस्त्रिः सम्मृज्य 'अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै सम्माज्र्म्यग्नि-मन्नादमन्नाद्याय' इति त्रिरग्निं प्राञ्चं सम्मृज्यात्।

### देवतावाहननिगदपाठः

तदनन्तरं होता 'आस्पात्रं जुहूर्देवानां चमसो देवपानोऽराँ वाग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानाय' इत्यवसाय 'अग्निमग्न आ[4]३वह, सोममा३वह, अग्निमा३वह, विष्णुम् ( उपांशु ) आ[5]३वह, महेन्द्रमा३वह, देवाँ आज्यपाँ आ३वह, अग्निं होत्रायाऽऽवह, स्वं महिमानमा३वह, आवह जातवेदः सुयजा यज' इत्यावाह्य यथास्थितमूर्ध्व-जानुरुपविश्य 'अदितिर्माताऽस्यान्तरिक्षान्मा च्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण च्छन्दसा-ऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मि' इत्युदग्वेदेर्व्युह्य तृणानि भूमौ प्रादेशं कुर्यात्।

---

1 'आप्यायता ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' ( तै० सं० १।६।५।१ ) इति समग्रो मन्त्रः।

2 अनुपरिक्रामं तं तं परिधिदेशं गत्वा इत्यर्थः।

3 येन क्रमेण परिहिताः परिधयस्तेन क्रमेण। अन्वग्रं मूलादारभ्याऽऽग्रात्।

4 'आदिं प्लावयन्' इत्याश्वलायनोक्तत्वात् 'आवह' इत्यस्य आदौ प्लुतिः कार्या।

5 उपांशुदेवतानाम्, आवह, स्वाहा, अयाट्, प्रिया धामानि, इदं हविः, महो ज्यायः इत्युच्चैरिति सूत्रात् आ३वह इत्युच्चैर्निर्देशः।

### जुहूपभृतोरादानम्

ततोऽध्वर्युः 'भुवनमसि'[1] इत्यग्रेण ध्रुवां जुहूं वा नमस्काराञ्जलिं कृत्वा 'जुह्वेहि'[2] इति दक्षिणहस्तेन जुहूमादाय 'उपभृदेहि'[3] इति सव्यहस्तेनोपभृतमादाय 'सुयमे मे अद्य घृताची भूयास्तं स्वावृतौ सूपावृतौ' इत्युपभृति जुहूमत्यादध्यात् । अत्यादधज्जुहूमुपभृति मुखेनाभिहृत्याभिमुखं हृत्वाऽत्यादध्यात् । तथा होमार्थमुपावहरन्मुखत एवोपावहरेत् । सर्वत्रैवमत्याधानोपावहरणे भवतः । न च ते संशिञ्जयेत् । नाभिदेशे च स्रुचौ धारयेत् ।

### वेद्युल्लङ्घनं द्वितीयाघारश्च

ततः 'अग्नाविष्णू मा वामवक्रमिषम्'[4] इत्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनव[5]क्रामं प्रस्तरं दक्षिणेन पदा दक्षिणाऽतिक्रम्योदक्सव्येन सव्येन पदा दक्षिणाऽतिक्रम्य दक्षिणेन प्रत्याक्रम्य वा 'विष्णोः स्थानमसि'[6] इत्युदङ्मुखोऽवस्थायान्तर्वेद्यां दक्षिणं पादं संस्थाप्य तत्पार्ष्णीं च बहिष्ठेन सव्यपदाङ्गुलिना स्पृशन्नप्रह्वन् दक्षिणं परिधिसन्धिमन्ववहृत्य 'समारभ्योर्ध्वो अध्वरः'[7] इति प्राञ्चमुदञ्चमृजुं सन्ततं ज्वलत्यग्नौ सर्वाणीध्मकाष्ठानि संस्पर्शयन्नाघारमाघारयेत् ।

यदि कमपि मरणधर्माणं कामयेत तदा ऋजुमाघारं वक्रं कुर्यात् । यदि यजमानशत्रुं मनसा ध्यायेत्तदा नाभिदेशादूर्ध्वमुद्गृहीतया स्रुचा

---

1 'भुवनमसि वि प्रथस्वाऽग्ने यष्टरिदं नमः' ( तै० सं० १।१।१२।१ ) इति समग्रो मन्त्रः ।

2 'जुह्वेह्यग्निस्त्वा ह्वयति देवयज्यायै' इति सम्पूर्णो मन्त्रः ।

3 'उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै' इति समग्रो मन्त्रः ।

4 'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तम्' ( तै० सं० १।१।१२।१ ) इति समग्रो मन्त्रः ।

5 पदा प्रस्तरमनवक्रम्यानवक्रम्य । अन्तरा प्रस्तरं न कुर्यादित्यर्थः । प्रस्तरे पदं न स्थापनीयम् । अतिक्रमणमपि न कर्त्तव्यमित्यर्थः ।

6 'विष्णोः स्थानमसीत इन्द्रो अकृणोद्वीर्याणि' इति समग्रो मन्त्रः ।

7 'समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त् स्वाहा' इति समग्रो मन्त्रः ।

धारामारभ्य मध्ये विच्छिन्द्यात् । अथवा प्रशिथिलामाहुतिं जुहुयात् । यदि यजमानो वर्षणं कामयेत तदा नाभिदेशान्नीचः स्रुचा आघारयेत् । अत्र यजमानशत्रोर्नीचैराघारमेके उपदिशन्ति । पूर्ववदूर्ध्वं सर्वाहुतीनां मध्ये भूयिष्ठं च स्वर्गकामो जुहुयात् । अपि वाऽऽघारं न कुर्यादित्येके वदन्ति । पूर्वार्धे मध्ये पश्चार्धे वा जुहुयात् ।

आघारानुमन्त्रणमन्त्रः

ततो यजमानः 'वागस्यैन्द्री सपत्नक्षयणी वाचा मे इन्द्रियेणाऽऽविश'[1] इति स्रुच्यमाघारमाघार्यमाणमनुमन्त्र्य 'इन्द्रायेदं न मम' इति त्यागं कुर्यात् ।

वेद्या उल्लङ्घनम्

तदनन्तरमध्वर्युराघारं हुत्वा तदुपरि श्वसित्वा 'बृहद्भाः' इति स्रुचमुद्गृह्य 'पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज' इति स्रुचौ असंस्पर्शयन् अग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रम्यानवक्रम्य प्रस्तरं सव्येन पदा प्रत्याक्रम्य दक्षिणेन पदा वा प्रत्या[2]क्रम्य 'मखस्य शिरोऽसि'[3] इति जुह्वाऽऽज्येन ध्रुवां द्विस्त्रिर्वा समज्य 'उन्नीतं रायः' इति स्रुवेण ध्रौवमाज्यमादाय 'सुवीराय स्वाहा' इति जुहूमभिघार्य जुह्वा आज्यमादाय 'यज्ञेन यज्ञः सन्ततः' इति ध्रुवां प्रत्यभिघार्याऽऽयतने स्रुचौ सादयित्वा 'क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णोः स्थाने तिष्ठामि' इतीध्मसन्नहनानि स्फ्य उपसंगृह्य वेद्याश्च तृणमव्य[4]न्त-

---

1 तै० सं० १।६।२।२

2 एते एव आक्रमणप्रत्याक्रमणे मन्त्रवती भवतः । अत्र मन्त्रवती भवतोऽन्यत्र तूष्णीम् ।

3 'मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम्' (तै० सं० १।१।१२।१) इति समग्रो मन्त्रः ।

4 अव्यन्तं नाम अविगतान्तं मध्यवर्त्यसम्बन्धं तस्य प्राच्यावनं, वेद्यां तृणमपिसृजतीति लिङ्गात् । तत्र वेदिस्थवेद्यसम्बन्धं तृणं ग्राह्यमित्येकः पक्षः । वेदिस्थमेव तृणं वेदिसम्बन्धं ग्राह्यमित्यपरः पक्षः ।

मादाय प्रवरं वक्तुं वेद्या उत्तरत एव पूर्वाभिमुखोऽवतिष्ठेत । आग्नीध्रोऽपि इध्मसन्नहनानि अन्वारभ्य 'क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णोः स्थाने तिष्ठामि' इत्यध्वर्योरपरभागे पूर्वाभिमुखोऽवतिष्ठेत ।

## प्रवराश्रावणानुज्ञा

ततोऽध्वर्युः 'ब्रह्मन् प्रवरायाऽऽश्रावयिष्यामि' इति ब्रह्माणमामन्त्रयेत । आमन्त्रणानन्तरं ब्रह्मा[1] 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओ३म् आश्रावय' इत्यतिसृजेत् ।

## आश्रावणप्रत्याश्रावणे

तदनन्तरमध्वर्युः 'आ३श्रा३वय'[2] इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात् । एवं प्रेषित आग्नीध्रः 'अस्तु श्रौ३षट्' इत्यपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यं सम्मार्गांश्च धारयन् प्रत्या[3]श्रावयेत् । ततो होता 'आश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसाय' इत्याग्नीध्रं प्रत्याश्रावयिष्यन्तमध्वर्युमनुमन्त्रयेत ।

---

1 आपस्तम्बब्रह्मा—'वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येषु देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणा सुकृता यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि' इत्युपांशु जपमुक्त्वा 'ओ३म् आश्रावय' इत्युच्चैरनुजानीयात् ।

2 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' ( पा० सू० ८।२।९१ ) इति पाणिनिसूत्रेण ब्रूहि, प्रेष्य, श्रौषट्, वौषट्, आवह इत्येतेषामादेः प्लुतः सिद्धः । आग्नीध्रप्रैषे तु 'आ३श्रा३वय' इत्यध्वर्युणा प्रयोक्तव्यः । तत्र 'अग्नीत्प्रेषणे परस्य च' ( पा० सू० ८।२।९२ ) इति शास्त्रं प्रमाणम् । अस्यायमर्थः—अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात् परस्य चेति ।

3 सोमयागे दर्शपूर्णमासविकृतिषु दीक्षणीयादिषु आग्नीध्रागारे तिष्ठन् प्रत्याश्रावणं कुर्यात् । अनेनैव क्रमेण सर्वत्राश्रावणं प्रत्याश्रावणञ्च कर्त्तव्यम् ।

अध्वर्युकर्तृकं प्रवराम्नानं स्रुगादापननिगदश्च

ततोऽध्वर्युः 'अग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदसितवदवत्सारवत्कश्यपवत्' इति यथार्षि यजमानस्य[1] प्रवरान् संकीर्त्य ऊर्ध्वज्ञुमासीनं होतारं वृत्वा ब्रह्मण्वदा च 'वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारः' इत्युक्त्वा होतुरुपांशु नाम गृहीत्वा 'मानुषः' इत्युच्चैरुक्त्वा यदव्यन्तमात्तं तृणं तद्वेद्यां प्रत्यपिसृजेत्। तदनन्तरं यजमानः 'देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे। यस्यास्मि न तमन्तरेमि। स्वं म इष्टं स्व दत्तं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम्। तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोता आदित्योऽनुख्याता। द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः। य एवास्मि स सन् यजे' इत्यध्वर्युणा प्रवरे प्रव्रियमाणे जपेत्। ततो होता 'देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुषः' इति प्रवृणानमध्वर्युमनुमन्त्र्य 'मानुषः' इत्यध्वर्योः श्रुत्वा 'उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु' इत्युत्थाय 'षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः। सिनन्ति पाकमतिधीर एति' इति जपित्वा 'ऋतस्य पन्थामन्वेमि होता' इत्यध्वर्युसमीपं गत्वा 'इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम्। येनाऽऽयन्नुत्तमं स्वर्देवा अङ्गिरसो दिवम्' इत्यंसेऽध्वर्युं पार्श्व[2]स्थेन दक्षिणेन पाणिना, आग्नीध्रमंसेऽङ्कदे[3]शेन सव्येन पाणिना

---

1 यस्य यजमानस्य य. प्रवरः प्रवरकाण्डे दर्शितस्तस्य तत्रोक्तानृषीनमुवदमुवदिति कीर्त्तयन् होतारं वृणीते यावन्तः स्युरिति। यथा—जमदग्निवदौर्ववद्भृगुवदित्यादि।

2 पार्श्वस्थेन पाणिनेत्यत्र 'अनादेशे दक्षिणं प्रतीयात्' ( आ० श्रौ० १।१।१३ ) इति परिभाषासूत्रेण दक्षिणः पाणिः प्रत्येतव्यः। पार्श्वस्थेनेत्यस्यायमर्थः—कनिष्ठिकाप्रदेशेन स्थितः, न न्यग्भूतो नोत्तान इत्यर्थः।

3 अङ्कदेशोऽपि पूर्वपरिभाषासूत्रेण दक्षिण एव गृह्यते। 'सव्येन वा' ( आ० श्रौ० १।३।२६ ) इति सूत्राच्च पाणिनोरुणा वा सह विकल्पः।

वाऽन्वारभ्य 'संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढि' इति संमार्गतृणैस्त्रि-रभ्यात्मं मुखं सकृन्मन्त्रेण द्विस्तूष्णीं संमृज्योदकं स्पृष्ट्वा स्वासनस्य पश्चादवस्थाय 'अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकतरः' इति होतृषदनमभिमन्त्र्य 'निरस्तः परावसुः' इत्यङ्गुष्ठोपक-निष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग् दक्षिणा निरस्याप उपस्पृश्य 'इदमहमर्वावसोः सदने सीदामि' इति दक्षिणोत्त[1]रिणोपस्थेनोपविश्य 'देवबर्हिः स्वासस्थं त्वाध्यासदेयम्' इति जपित्वा 'अभिहिष होतः प्रतरां वर्हिषद्भव' इति जानुशिरसा वर्हिरुपस्पृश्य 'भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः । नमो महद्भ्यो नम अर्भकेभ्यो नमो युवभ्यो नम आश्विनेभ्यः । यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः । विश्वे देवाः शास्त न मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि । अराधि होता निषदा यजीयानभिप्रयांसि सुधितानि हि ख्यत् । यजामहै यज्ञियान्हन्त देवाँ ईळामहा ईड्याँ आज्येन । तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम । ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्' इति जपित्वा प्रदीप्त इध्मे 'अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता यो अग्निम्' इत्यवसाय 'होतारमवृथाः' इति जपित्वा 'घृतवतीमध्वर्यो: स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान्यजाम यज्ञियान्' इति निगदशेषं समापयेत् । अग्निर्होतेत्यारभ्य यज्ञियानित्यन्तो-ऽयमेकः स्रुगादापननिगदः ।

---

1 दक्षिणं च तदुत्तरं च दक्षिणोत्तरम् । तद्वानुपस्थो दक्षिणोत्तरी उपस्थः । तेनोपविशेत् । वामोरूपरि दक्षिणे पादे संस्थापिते सति उपस्थो भवति । उक्तं चाभियुक्तैः—'दक्षिणं चोपविश्योरु वामगुल्फोपरि न्यसेत् । वामोरुं दक्षिणं गुल्फं तच्चोपस्थमुदीरितम्' इति ।

### प्रयाजाः

ततोऽध्वर्युः होत्रा 'अग्निर्होता' इत्यस्मिन्निगदे उच्यमाने तत्रस्थ-घृतवतीशब्दे श्रूयमाणे जुहूपभृतावादाय दक्षिणा सकृदतिक्रम्योदङमुख-स्तिष्ठन् 'आ३श्रा३वय'[1] इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात्। तत आग्नीध्रः अपरेणोत्करं दक्षिणाभिमुखस्तिष्ठन् स्फ्यं सम्मार्गांश्च धारयन् 'अस्तु श्रौ३षट्' इति प्रत्याश्रावयेत्। सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः।

### प्रथमः प्रयाजः

तत्राध्वर्युः 'समिधो यज' इति प्रथमं प्रयाजं प्रति होतारं सम्प्रेष्येत्। एवं प्रेषितो होता 'ये३ यजामहे[2] समिधः समिधो अग्न आज्यस्य व्यन्तू३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। तत्र होत्रा वौषडित्युक्तेऽध्वर्युरपरेणाऽऽघारस[3]म्भेदं पुरस्तात् प्रथमं प्रयाजं जुह्वा जुहुयात्।

### प्रयाजानुमन्त्रणमन्त्रः

ततो यजमानः 'पृथिवी होता। द्यौरध्वर्युः। मित्रोऽग्नीत्। बृहस्पतिरुपवक्ता' इति चतुर्होतृमन्त्रं व्याख्याय 'समिद्भ्योऽग्नय इदं न

---

1 सर्वेषामध्वर्युप्रभृतीनां प्रचरतां हविरादानादिप्रदानान्तं वाग्यमनं नियम्यते सूत्रकारेण। नियमविध्यपराधे च पुनराश्रावणादि व्याहृतिजपो वा प्रायश्चित्तमभिधीयते। तस्मात् प्रायश्चित्तभिया सर्वैर्वाग्यतैर्भवितव्यम्।

2 ये यजामहे, वौषट्, व्यन्तु इत्यत्राचार्येण 'तयोरादी प्लावयेत्' 'याज्यान्तं च' ( आ० श्रौ० १।५।७-८ ) इति सूत्राभ्यां प्लुतो विहितः।

3 आघारसम्भेदो नाम आघारयोः सङ्गमः। पूर्वोत्तराघारयोर्मेलन-मित्यर्थः।

मम' इति त्यागं कृत्वा 'वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु' 'एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति हुतं प्रथमं प्रयाजमनुमन्त्रयेत ।

## द्वितीयः प्रयाजः

ततोऽध्वर्युः द्वितीयप्रयाजार्थम् 'आ३श्रा३वय' इत्याग्नीध्राय सम्प्रैषं दद्यात् । आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत् । तदनन्तरमध्वर्युः 'यज' इति द्वितीयं प्रयाजं प्रति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'ये३यजामहे [1]तनूनपादग्न आज्यस्य वेतू३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमनुमन्त्रयेत । अत्रापि पूर्ववत् होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसम्भेदं दक्षिणतो द्वितीयं प्रयाजं जुहुयात् । ततो यजमानः 'तनूनपातेऽग्नय इदं न मम' इति त्यागं कृत्वा 'ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु' 'द्वौ मम द्वे तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति हुतं द्वितीयं प्रयाजमनुमन्त्रयेत ।

## तृतीयः प्रयाजः

तदनन्तरमध्वर्युस्तृतीयप्रयाजार्थम् 'आ३श्रा३वय' इति पूर्ववदाग्नीध्रं सम्प्रेष्य 'अस्तु श्रौ३षट्' इत्याग्नीध्रेन पूर्ववत् प्रत्याश्राविते 'यज' इति तृतीयं प्रयाजं प्रति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'ये ३ यजामह इळो अग्न आज्यस्य व्यन्तु ३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत । तत्र होत्रा

---

1 'ये३ यजामहे नराशसो अग्न आज्यस्य वेतू३ वौ३षट्' इत्ययं प्रयाजो द्वितीयप्रयाजतनूनपात्स्थाने वसिष्ठशुनकात्रिवध्रश्वराजन्यानां द्वितीयो वक्तव्यः । अत्रानुमन्त्रणं तु पूर्ववद् भवति ।

वौषडित्युक्तेऽपरेणाऽऽघारसम्भेदं पश्चात्तृतीयं प्रयाजं जुह्वा निःशेषं जुहुयात् । ततो यजमानः 'इड्भ्योऽग्नय इदं न मम' इति त्यागं कृत्वा 'वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु' 'त्रयो मम तिस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति हुतं तृतीयं प्रयाजमनुमन्त्रयेत ।

### औपभृतस्याज्यस्य जुह्वामानयनं चतुर्थः प्रयाजश्च

अनेनैव प्रकारेणाध्वर्युस्त्रीन् प्रयाजान् जुहूस्थितेनाज्येनेष्ट्वाऽर्धमौपभृतस्याज्यस्य जुह्वामानीय 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात् । आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत् । ततोऽध्वर्युः 'यज' इति चतुर्थं प्रयाजं प्रति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'ये३यजामहे बर्हिरग्न आज्यस्य वेतु ३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत । तत्र होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसम्भेदमुत्तरतश्चतुर्थं प्रयाजं जुह्वा जुहुयात् । ततो यजमानः 'बर्हिषेऽग्नय इदं न मम' इति त्यागं कृत्वा 'शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु' 'चत्वारो मम चतस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति हुतं चतुर्थं प्रयाजमनुमन्त्रयेत ।

### पञ्चमः प्रयाजः

एवं पञ्चमप्रयाजार्थमध्वर्युः 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात् । आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत् । ततोऽध्वर्युः 'यज' इति पञ्चमं प्रयाजं प्रति होतारं सम्प्रेष्येत् । एवं

प्रेषितो होता 'ये[1] ३ यजामहे स्वाहाऽग्निं स्वाहा सोमं स्वाहा विष्णुं[2] ( उपांशु ) स्वाहा महे[3]न्द्रं स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तू ३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत । तत्र होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसम्भेदं[4] मध्ये पञ्चमं प्रयाजं जुह्वा सशेषं जुहुयात् । ततो यजमानः 'स्वाहाकारायाग्नय इदं न मम' इति त्यागं कृत्वा 'हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताम्' 'पञ्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति हुतं पञ्चमं प्रयाजमनुमन्त्रयेत ।

दर्शपूर्णमासयोः पञ्च प्रयाजा भवन्ति । तान् आहवनीय-समीपं गत्वा जुहुयात् । तत्र पञ्चसु प्रयाजेषु यष्टव्येषु प्रथमप्रयाजहोम आहवनीयाद्दक्षिणतः कियतिचन दूरे स्थित्वा कर्त्तव्यः । द्वितीयप्रयाजहोमस्ततोऽपि किञ्चिदभिक्रम्याग्निसमीपं गत्वा कर्त्तव्यः । एवं पञ्चस्वपि प्रयाजेषु पूर्वपूर्वप्रयाजापेक्षया उत्तरोत्तरप्रयाजार्थं

---

1 पौर्णमास्यामसोमयाजिनः सोमयाजिनश्च—'ये ३ यजामहे स्वाहाऽग्निं स्वाहा सोमं स्वाहाऽग्निं स्वाहा विष्णुं ( उपांशु ) स्वाहाऽग्नीषोमौ स्वाहेन्द्रं वैमृध स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तू ३ वौ३षट्' इति विशेषः।

2 आपस्तम्बयजमानस्यासोमयाजिनः सोमयाजिनश्च अमावास्यायां विष्णुयागो नास्ति, तस्मात्तत्कीर्तनमप्युत्तमप्रयाजादिषु नास्तीति ज्ञेयम् ।

3 अमावास्यायामसोमयाजिनः 'स्वाहा महेन्द्रमि'त्यस्य स्थाने 'स्वाहेन्द्राग्नी' इति वक्तव्यम् । अन्यत् स्वाहा देवा आज्यपेत्यादि समानम् ।

4 प्रयाजानुष्ठाने देशविकल्पः सूत्रकारेणैवमभिहितः—अपरेणाऽऽघारसम्भेदं प्रागपवर्गान् पञ्च प्रयाजान् यजेत् । अथवाऽपरेणाऽऽघारसम्भेदं प्रतिदिशमेते यष्टव्याः। तत्र पुरस्तात् समिधः, दक्षिणतस्तनूनपातं, पश्चाद्भागे इडः, उत्तरतो बर्हिः, मध्ये च स्वाहाकारं यजेत । यद्वाऽपरेणाऽऽघार-सम्भेदमेकस्मिन् देशे सर्वान् प्रयाजान् यजेत ।

किञ्चित् किञ्चिदिवाग्निसमीपे गन्तव्यम् । तदेतदभिक्रमणमित्युच्यते । यद्यपि सूत्रकार आपस्तम्बः काम्यतया अभिक्रमण निर्दिशति तथापि 'अभिक्रामं जुहोत्यभिजित्यै' इत्यभिक्रमणस्य फलार्थत्वदर्शनात् नित्यानुष्ठानेऽपि फलसाधनत्वमस्तीति ज्ञायते । भारद्वा[1]जस्तु प्रयाजानुष्ठाने नित्यतया अभिक्रमणं विधत्ते ।

## प्रयाजशेषाभिघारणम्

ततोऽध्वर्युः पूर्वोक्तेन प्रकारेण प्रत्याक्रम्य जुह्वाऽऽज्यशेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघार्य औपभृताज्ये निःशेषं जुह्वाऽऽज्य-मानीय स्वायतने जुहूपभृतौ सादयित्वा तूष्णी ध्रुवातः स्रुवेणाऽऽज्यमादाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणादाय 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' इति ध्रुवामाप्याय्य स्रुवेण प्रस्तर-बर्हिषी समञ्ज्यात् ।

## आज्यभागौ

तदनु 'अग्नयेऽनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं सम्प्रेष्येत् । एवं प्रेषितो होता [2]'अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् । कविर्वि-प्रेण वावृधो३म्' इति पुरोऽनुवाक्यां ब्रूयात् । इत आरभ्याऽऽस्विष्टकृतो मध्यमेन स्वरेण प्रयोक्तव्यम् । ततोऽध्वर्यस्तूष्णीं ध्रुवास्थमाज्यं स्रुवेणादाय जुह्वामानीय आज्यस्थाल्या आज्यं स्रुवेणादाय 'आप्यायतां

---

1 भा० श्रौ० २।१६।५

2 पौर्णमास्या तु 'अग्निः प्रत्नेने'त्यस्याः पुरोऽनुवाक्यायाः स्थाने होता 'अग्नि-र्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतो३म्' (ऋ० सं० ६।१६।३४) इति पुरोऽनुवाक्यां ब्रूयात् ।

ध्रुवा घृतेन' इत्यादिमन्त्रेण ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं सम्प्रेष्येत्। आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत्। ततोऽध्वर्युः 'अग्निं यज' इति याज्यायै होतारं सम्प्रेष्येत्। एवं प्रेषितो होता 'ये३यजामहेऽग्निं जुषाणो अग्निराज्यस्य वेतू३वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। होत्रा वौषडित्युक्ते ज्योतिष्मदग्ने-रुत्तरार्धपूर्वार्धेऽग्नये जुहुयात्। ततो यजमानः 'अग्नय इदं न मम' इति त्यागं[1] कुर्यात्।

## द्वितीय आज्यभागः

तदनन्तरमध्वर्युः प्रत्याक्रम्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृ वी यज्ञे अस्मिन्' इति ध्रुवामाप्याय्य स्रुवेण प्रस्तर-बर्हिषी समज्य 'सोमायानुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं सम्प्रेष्येत्। एवं प्रेषितो होता '[2]सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृळीको न आविशो३म्' इति पुरोऽनुवाक्यां ब्रूयात्। ततोऽध्वर्युस्तूष्णी

---

1 'अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान् भूयासम्' इत्याग्नेय-माज्यभाग हुतमनुमन्त्रयेत। इदमनुमन्त्रणं प्रत्याज्यभागमनुमन्त्रणकरणपक्षः सूत्रोक्तो गृहीतश्चेदेव भवति। द्वयोरप्याज्यभागयोर्युगपदेवानुमन्त्रणं सूत्रकृतोक्तमस्ति। युगपदनुमन्त्रणपक्षस्तु अग्रे प्रदर्शितरीत्या स्वीकार्यः।

2 ऋ० सं० १।९१।११ ; पौर्णमास्यां 'सोम गीर्भिष्ट्वा' इत्यस्याः पुरोऽनु-वाक्यायाः स्थाने होता 'त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतो३म्' (ऋ० सं० १।९१।५) इति पुरोऽनुवाक्यां पठेत्।

ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात् । आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत् । ततोऽध्वर्युः 'सोमं यज' इति याज्यायै होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'ये३ यजामहे सोमं जुषाणः सोम आज्यस्य हविषो वेतू ३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत । होत्रा वौषडित्युक्तेऽध्वर्युः ज्वलदग्नेर्दक्षिणार्धपूर्वार्धे पूर्वाज्यभागेन समं सोमाय जुहुयात् । ततो यजमानः 'सोमायेदं न मम' इति त्यागं[1] कृत्वा 'अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम्' इति हुतावाज्यभागावनुमन्त्रयेत ।

## व्रतलोपप्रायश्चित्तहोम

तदनन्तरमध्वर्युः प्रत्याक्रम्य स्वासन उपविश्याऽऽज्यभागार्थं गृहीते जुहूपभृतौ स्वायतने स्विष्टकृद्यागसमाप्तिपर्यन्तं न निदध्यात् । हस्त एव धारयेदित्यर्थः । अत्राग्नीषोमावाज्यभागौ चतुर्गृहीताभ्यामाज्याभ्यां कर्त्तव्यौ । यत्र यत्र चतुरवत्तचोदना तत्र तत्र जमदग्निगोत्राणां पञ्चावत्तं भवति । अजामदग्न्योऽपि पञ्चावत्तमिच्छन् जामदग्न्यमनुज्ञाप्य सर्वत्र पञ्चावत्तं कुर्वीत । पञ्चावत्तिनस्तु पुनरेकदा तूष्णीं ध्रुवास्थमित्यारभ्य प्रस्तरबर्हिषो समज्येत्यन्तं कर्त्तव्यम् । व्रत्येऽह्नि व्रतलोपप्रायश्चित्तार्थं व्रातपतीष्टिस्थान आपस्तम्बयजमानः पूर्णाहुतिमित्यत्र स्रुवाहुतिमिति वदेत् । ततोऽध्वर्युस्तूष्णीमाज्यस्थाल्या आज्यं

---

1 सोमस्याऽऽज्यभागस्य पृथगनुमन्त्रणपक्षे—'सोमेन यज्ञश्चक्षुष्मान् सोमस्याहं देवयज्यया चक्षुष्मान् भूयासम्' इति मन्त्रः ।

जुह्वां चतुर्वारं स्रुवेण गृहीत्वा 'अग्नये व्रतपतये स्वाहा' इति जुहुयात् । यजमानोऽपि 'अग्नये व्रतपतय इदं न मम' इति त्यागं कृत्वा 'सम्भावित-समस्तदोषनिर्हरणार्थं सर्वप्रायश्चित्तं करिष्ये' इति ब्रूयात् । ततोऽध्वर्युः आज्यस्थाल्या आज्यं स्रुवेण तूष्णीं जुह्वां सकृद् गृहीत्वा 'भूर्भुवः सुवः स्वाहा' इति जुहुयात् । यजमानोऽपि 'प्रजापतय इदं न मम' इति त्यागं कृत्वा 'अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता' इति पुरस्ताद्धविरवदानस्य पञ्चहोतारं वदेत् ।

## आग्नेययागः

ततोऽध्वर्युः तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'अग्नयेऽनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म्' [1]इति पुरोऽनुवाक्यां ब्रूयात् । ततोऽध्वर्युः प्रत्याक्रम्य जुह्वामुपस्तीर्य 'मा भेर्मा संविक्था मा त्वा हिंसिषं मा ते तेजोऽपक्रमीत् । भरतमुद्धरेम-मनुषिञ्चावदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिंसीः' इत्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठ[2]पर्वमात्रमवदानं

---

1 ऋ० सं० ८।४४।१६

2 अङ्गुष्ठपर्वं अङ्गुष्ठस्योत्तमं काण्डम् । तिरश्चीनं तिर्यग्भिरङ्गुल्यङ्गुष्ठैर्यथाऽवदानं सम्पद्येत तथा । तत्तद्यागेषु सम्पादितेभ्यश्चरुपुरोडाशसान्नाय्येभ्यो हविर्भ्यः तत्तद्देवताभ्यः प्रदानार्थं यत् पृथक्करणं तदवदानमित्युच्यते । तदवदानं द्रवद्रव्येषु दध्याज्यपयःप्रभृतिषु स्रुवेण कुर्यात्, चरुपुरोडाशादिषु कठिन-द्रव्येषु हस्तेन कुर्यात्, वपामांसादौ तु स्वधितिना कुर्यात् ।

दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद् द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय[1] जुह्वामवधाय हस्तं प्रक्षाल्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'यदवदानानि तेऽवद्यन् विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः' इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात्। तत आग्नीध्रः 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत्। ततोऽध्वयुः 'अग्निं यज' इति याज्यायै होतारं सम्प्रेष्येत्। एवं प्रेषितो होता 'ये३यजामहेऽग्निं[2] भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहाँ३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। होत्रा वौषडित्युक्तेऽध्वर्युः स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन्नाघारसम्भेददेशे हुत्वाऽऽज्यशेपमन्ववस्रावयेत्। यदा शान्तार्चिरङ्गारेषु लेलीयमान इव विस्फुर्जत्यग्निस्तदाहुतीर्जुहुयात्।

प्रधानयागानुमन्त्रणमन्त्रः

ततो यजमानः 'अग्नय इदं न मम' इति त्यागं कृत्वा 'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्' इत्याग्नेयं पुरोडाशं हुतमनुमन्त्रयेत।

---

1 पञ्चावत्तिनो यजमानस्य कृते पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः।

2 ऋ० सं० १०।८।६

उपांशुयाजः

तदनन्तरमध्वर्युः प्रत्याक्रम्य स्वासन उपविश्य तूष्णी ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' इति ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य '(उपांशु) विष्णवे, (उच्चैः) अनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं सम्प्रेष्येत्। एवं प्रेषितो होता उपांशु 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूळ्हमस्य पांसुरे'[1] इत्युच्चार्य उच्चैः 'ओ३म्' इति समग्रां पुरोऽनुवाक्यां ब्रूयात्। ततोऽध्वर्युः तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् वारत्रयं ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं सम्प्रेष्येत्। आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत्। आश्रावणप्रत्याश्रावणानन्तरमध्वर्युः (उपांशु) 'विष्णुं', (उच्चैः) यज' इति याज्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता (उच्चैः) 'ये ३ यजामहे, (उपांशु) विष्णुं[2] त्रिर्देव पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा। प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नामा३, (उच्चैः) वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। अध्वर्युश्च होत्रा वौषडित्युक्ते स्रुच्याघारस्योपरि जुह्वग्रेण जुहुयात्। तदनु यजमानः 'विष्णव इदं न मम' इति त्यागं कृत्वा 'दब्धिरस्यदब्धो भूयासं पाप्मानं दभेयम्' इत्युपांशुयाजं हुतमनुमन्त्रयेत[3]।

1 ऋ० सं० १।२२।१७ ; अत्रेदमवधेयम्—उपांशुयाजाख्ये कर्मणि विष्णुः प्रजापतिः अग्नीषोमौ च देवतात्वे विकल्पन्ते। उपांशुयाजोऽयमापस्तम्बीयाना पौर्णमास्यामेव यष्टव्यः। बह्वृचबौधायनीयकातीयानां तु सोऽयममावास्यायामपि भवति।

2 ऋ० सं० ७।१००।३

3 असन्नयतोऽमावास्यायां महेन्द्रयागो नास्ति। पौर्णमास्यां तु सान्नाय्यप्रसङ्ग

## सान्नाय्ययागः

अनन्तरमध्वर्युः प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणादाय 'आप्यायताम्' इत्यादिमन्त्रेण पूर्ववद् ध्रुवामाप्याय्य स्रुवेण

---

एव नास्त्यनाम्नानात्। पौर्णमास्यामयं विशेषः पुनरत्रानुसन्धातव्यः—उपांशुयाजानुमन्त्रणानन्तरमध्वर्युः प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं प्रस्तरबर्हिषी समज्य 'अग्नीषोमाभ्यामनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता 'अग्नीषोमा सवेदसा सहूती वनतं गिरः। स देवत्रा बभूवथो३म्' (ऋ० सं० १।९३।९) इति पुरोऽनुवाक्यां ब्रूयात्। ततोऽध्वर्युः 'मा भेर्मा संविक्थाः' इत्यादिमन्त्रेणाग्नीषोमीयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रैरङ्गुलिभिरवदाय जुह्वामवधाय पूर्वार्धाद् द्वितीयमवदानं प्रागग्रैरङ्गुलिभिरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य तूष्णी ध्रुवास्थमाज्य स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इत्यादि पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'यदवदानानि' इति स्रुवेणाज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात्। आग्नीध्रोऽपि 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्रावयेत्। ततोऽध्वर्युः 'अग्नीषोमौ यज' इति याज्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता 'ये३यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३न्वौ३षट्' (ऋ० सं० १।९३।५) इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। होत्रा वौषडित्युक्तेऽध्वर्युः स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन् स्रुच्याघारोपरि उपांशुयाजहोमसन्निहितं हुत्वाऽऽज्यशेषमन्ववश्रावयेत्। ततो यजमानः 'अग्नीषोमाभ्या स्रुवेणायाय 'आप्यायताम्' इत्यादिमन्त्रेण पूर्ववद् स्रुवामाद्याय्य स्रुवेणमिदं न मम' इति त्यागं कृत्वा 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्यग्नीषोमीयं पुरोडाशं हुतमनुमन्त्रयेत। अग्नीषोमीयपुरोडाशानुमन्त्रणात् परमध्वर्युः प्रत्याक्रम्य 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'इन्द्राय वैमृधायानुब्रू३हि' हति पुरोनुवाक्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता 'वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। यो अस्माँ अभिदासत्यधरं गमया तमो३म्' (ऋ० सं० १०।१५२।४) इति पुरोऽनुवाक्यां ब्रूयात्। ततोऽध्वर्युः 'मा भेर्मा संविक्थाः' इत्यादिमन्त्रेण ऐन्द्रवैमृधस्य पुरोडाशस्य मध्यात्

प्रस्तरबर्हिषी समज्य 'महेन्द्रा[1]यानुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं

प्रथममवदानं पूर्वार्धाच्च द्वितीयमवदानमवदाय जुह्वामवधाय 'आप्यायताम्' इत्यादि पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'यदवदानानि' इत्यादि पूर्ववत् स्रुवेणाज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखोऽवस्थाय 'आ३श्रा३वय' इत्याग्नीध्रं सम्प्रेष्येत्। आग्नीध्रेण पूर्ववत् प्रत्याश्राविते 'इन्द्रं वैमृधं यज' इति याज्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता 'ये३यजामहे, इन्द्रं वैमृधं मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः। सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताह्ळि वि मृधो नुदस्व ३, वौ३षट्' (ऋ० सं० १०।१८०।२) इति वषट्कार-मुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। ततो-ऽध्वर्युः होतृप्रयुक्तं वौषडित्युक्तं ज्ञात्वा स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन् स्रुच्याघारोपरि अग्नीषोमीय-होमसन्निहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत्। तदनु यजमानः 'इन्द्राय वैमृधायेदं न मम' इति त्यागं कृत्वा 'इन्द्रस्य वैमृधस्याहं देवयज्यया सपत्नो वीर्यवान् भूयासम्' इत्यैन्द्रवैमृधं पुरोडाशं हुतमनुमन्त्रयेत। ततः पार्वणहोमः कर्तव्यः।

1 असोमयाजिनः अमावास्यायामुपांशुयाजानुमन्त्रणानन्तरमेवं करणीयम्—तत्राध्वर्युः प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानी-याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इत्यादिमन्त्रेण पूर्ववद् ध्रुवा-माप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'इन्द्राग्निभ्यामनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं सम्प्रेष्येत्। एवं प्रेषितो होता 'इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा। मा नो दुःशंस ईशतो३म्' (ऋ० सं० ७।९४।७) इति पुरोऽनुवाक्यां ब्रूयात्। ततोऽध्वर्युः 'मा भेर्मा संविक्थाः' इत्यादिमन्त्रेण ऐन्द्राग्नस्य पुरोडाशस्य मध्यादङ्गुष्ठ-पर्वमात्रमवदानं दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धा-द्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य (अत्र पञ्चावत्ती पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः) तूष्णीं ध्रुवास्थ-माज्यं स्रुवेणाऽऽदायावदानान्यभिघार्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'यदवदानानि' इति स्रुवेणा-ऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं प्रति सम्प्रैषं कुर्यात्। आग्नीध्रेण 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्राविते ऽध्वर्युः 'इन्द्राग्नी यज' इति याज्यायै होतारं प्रेष्येत्। एवं प्रेषितो होता 'ये३यजामह इन्द्राग्नी, गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम्।

सम्प्रेष्येत् । होता च [1]'महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधो३म्' इति पुरोऽनुवाक्यां ब्रूयात् । ततोऽध्वर्युः 'मा भेर्मा संविक्थाः' इत्यादिमन्त्रेण शृतस्य प्रातर्दोहस्य मध्यात् स्रुवेणाऽऽदाय जुह्वां निधाय पूर्वार्धाद् द्वितीयं स्रुवेणाऽऽदाय जुह्वां निधाय 'मा भेर्मा संविक्थाः' इति दधिमध्यादवदानं स्रुवेणाऽऽदाय जुह्वां निधाय तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्याऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'यदवदानानि' इति तन्त्रेण श्रृतं दधि च प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा 'आ.श्रा३वय' इत्याग्नीध्रं सम्प्रेष्य आग्नीध्रेण पूर्ववत् प्रत्याश्राविते 'महेन्द्रं यज' इति याज्यायै होतारं प्रेष्येत् । होता च 'ये३यजामहे महेन्द्रं,[2] भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄंश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षण[3]३ वौ३षट्' इति वषट्कारमुक्त्वा

---

इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णै ३ वौ३षट्' (ऋ० सं० ७।९३।४) इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत । होत्रा वौषडित्युक्ते अध्वर्युः स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन् स्रुच्याधारोपरि उपांशुयाजहोमसन्निहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत् । ततो यजमानः 'इन्द्राग्निभ्यामिदं न मम' इति त्यागं कृत्वा 'इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्' इत्यैन्द्राग्नं पुरोडाशं हुतमनुमन्त्रयेत । ततः पार्वणहोमः समनुष्ठेयः । आपस्तम्बीययजमानस्य सन्नयदसन्नयतोरमावास्यायामुपांशुयाजाभावादाग्नेयानन्तरमसन्नयता ऐन्द्राग्नो यागः कर्तव्यः । सन्नयतस्तु आग्नेयानन्तरं माहेन्द्र एवेति ज्ञेयम् ।

1 ऋ० सं० ८।६।१

2 ऋ० सं० १०।५०।४

3 अत्र 'याज्यान्तं च' (आ० श्रौ० १।५।८) इत्याश्वलायनसूत्रानुसारं 'भुवस्त्वमिन्द्र' इत्यादियाज्याया अन्त्यमक्षरं 'विश्वचर्षणे' इति प्लावितम् । अत्रायमभिप्रायः सूत्रकारस्य—याज्यान्ते वर्तमानानामप्रगृह्यानां सन्ध्यक्षराणां विवेचनपूर्वकमाकारमेव प्लावयेत् । तत्र एकारैकारयोरा३इ इति । ओकारौकारयोरा३ उ इत्येवं विविच्य प्लुतिः कार्या । तेन 'विश्वचर्षणे' इत्यस्य 'विश्वचर्षणा३ इ' इति रूपं सम्पन्नम् ।

'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत। होत्रा वौषडित्युक्ते स्रुच्याघारस्योपरि उपांशुयाजहोमसन्निहितं तद् द्रव्यं स्रुङ्मुखेन जुहुयात्। सर्वाणि द्रवद्द्रव्याणि स्रुङ्मुखेन जुहुयात्। ततो यजमानः 'महेन्द्रायेदं न मम' इति त्यागं कृत्वा 'महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम्' इति माहेन्द्रं सान्नाय्यमनुमन्त्रयेत।

## पार्वणहोमः

ततोऽध्वर्युः प्रत्याक्रम्य वेदेरुत्तरत उपविश्य स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय 'अ[1]मावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना। सा नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। अपानाय सुराधसेऽमावास्याय स्वाहा' इति पार्वणहोमं जुहुयात्।

## नारिष्ठहोमाः

तदनन्तरं यजमानेन 'अमावा[2]स्याया इदं न मम' इति त्यागे कृतेऽध्वर्युः आज्यस्थाल्या आज्यं स्रुवेण जुह्वां षड्वारं सप्तवारं वा गृहीत्वा 'दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् स्वाहा' इति प्रथमं

---

1 अमावास्यायामसन्नयतोऽप्येवमेव पार्वणहोमः कर्तव्यः। पौर्णमास्यां सन्नयदसन्नयतोस्त्वयं विशेषः—'ऋषभं वाजिनं वयं पूर्णमासं हवामहे। स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहा' इति जुहुयात्। पर्वसम्बन्धिनौ पार्वणौ इति पार्वणशब्दव्युत्पत्तिः। पर्वशब्देन पूर्णमास्यमावास्याकालिकौ कर्मसमुदायावुच्येते।

2 पौर्णमास्याम् 'पूर्णमासायेदं न मम' इति त्यागं कुर्यात्।

नारिष्ठहोमं जुहु[1]यात् । ततो यजमानः 'नारिष्ठाभ्यामग्निवायुभ्यामिदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युः 'यं वां देवा अकल्पयन्नूर्जो भागं शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमं हहौ स्वाहा' इति द्वितीयं जुहुयात् । यजमानोऽपि पूर्ववदत्रापि 'नारिष्ठाभ्यामग्नि-वायुभ्यामिदं न मम' इति त्यागं कुर्यात् । एतदनन्तरमध्वर्युः 'अहं देवानां सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान् यदाभ्यामिन्द्रो अदधाद् भागधेयं स्वाहा' इति तृतीयं जुहुयात् । ततो यजमानः 'नारिष्ठाभ्यामग्निवायुभ्यामिदं न मम' इति त्यागं कुर्यात् । तदनु अध्वर्युः 'अदारसृद्भवत देव सोमास्मिन् यज्ञे मरुतो मृडता नः । मा नो विददभि भामो अशस्तिर्मा नो विददवृजना द्वेष्या या स्वाहा' इति चतुर्थं जुहुयात् । ततः यजमानः 'नारिष्ठेभ्यः सोममरुद्भ्य इदं न मम' इति त्यागं कुर्यात् । ततः परमध्वर्युः 'ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानां हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताऽऽहुतिरेतु देवान् स्वाहा' इति पञ्चमं जुहुयात् । ततो यजमानः 'नारिष्ठाय ब्रह्मण इदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युः 'सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे' इति षष्ठं जुहुयात् । तदनन्तरं यजमानः 'नारिष्ठाय ब्रह्मण इदं न मम' इति त्यागं कुर्यात् ।

ततो यदि सप्तवारमाज्यं गृहीत्वा यागं चिकीर्षेत्तदा अध्वर्युणा तद् ग्राहयेत् । अध्वर्युरपि 'सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत् स्वाहा' इति सप्तमं जुहुयात् । ततो यजमानः 'नारिष्ठायाग्नय इदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युः 'सं प्राणे

---

1 प्रधानयागानन्तरं स्विष्टकृद्यागात् पूर्वं क्रियमाणः पार्वणहोमो नारिष्ठहो-माश्च तैत्तिरीयाणामेव भवन्ति, नान्यशाखिनाम् । शाखान्तरे तद्विध्यदर्शनात् तन्मन्त्रपाठाभावाच्च ।

प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहा' इति अष्टमं जुहुयात् । यजमानोऽपि 'नारिष्ठाय ब्रह्मण इदं न मम' इति त्यागं कुर्यात् । अनेनैव क्रमेण एतान् नारिष्ठहोमान्[1] जुहुयात् । अयमेव एषामुपहोमानां कालः । प्रधानयागात् परं समिष्टयजुर्होमात् वा प्रागेते उपहोमाः कर्त्तव्याः ।

### स्विष्टकृद्याग:

ततोऽध्वर्युः तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य 'अग्नये स्विष्टकृतेऽनुब्रू३हि' इति पुरोऽनुवाक्यायै होतारं संप्रेष्य[2] 'पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतूपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठो३म्' इति होत्रा पुरोऽनुवाक्यायामुक्तायां तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य सर्वेषां हविषामुत्तरार्धात् सकृत् सकृत् स्विष्टकृते प्रधानावदानाद् भूयिष्ठमवदाय जुह्वामवधाय प्रतिहविरव[3]दानं हस्तं प्रक्षाल्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणादाय जुह्वामानीयाऽऽज्यस्थाल्या आज्यं स्रुवेणादाय 'आप्यायताम्' इति पूर्ववद् ध्रुवामाप्याय्य स्रुवेण प्रस्तरबर्हिषी समज्य पुनरपि 'आप्यायताम्' इति

---

1 अत्र 'सन्ते मनसा' इत्यारभ्य 'चतुष्पदे स्वाहा' इत्यन्त एको मन्त्र इति भाष्यकारमतम् । 'सन्ते मनसा' इति प्रतीकगृहीतं 'सन्ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत् स्वाहा' इति यजुरेको मन्त्रः । 'सं प्राणे प्राणम्' इत्यारभ्य स्वाहान्तोऽपरो मन्त्र इति केषाञ्चित् पक्षः । अत्र वृत्तिकारो रुद्रदत्तो द्वितीयपक्षमेवाङ्गीकरोति प्रथमपक्षं खण्डयति च ।

2 ऋ० सं० १०।२।१

3 पञ्चावत्तिनस्तु द्विरवदानं कर्त्तव्यम् ।

ध्रुवामाप्याय्य न हविः प्रत्यभिघार्य, दक्षिणाऽतिक्रम्योदङ्मुखः 'आ३श्रा३वय' इत्याग्नीध्रं संप्रेष्य आग्नीध्रेण 'अस्तु श्रौ३षट्' इति प्रत्याश्राविते सति 'अग्निं स्विष्टकृतं यज' इति याज्यायै होतारं प्रेष्येत्। होता च [1]'ये३ यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाडग्नेः प्रियाधामान्ययाट् (उपांशु) विष्णोः, (उच्चैः) प्रियाधामान्ययाण्महेन्द्रस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत् स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हवि[2]रग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा। ऋता यजासि महिना वि यद् भूर्हव्या वह यविष्ठ या ते अद्या३ वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुपांश्वनुमन्त्रयेत।

अत्रेदमवधेयम्-'ये३ यजामहेऽग्निं स्विष्टकृतमिति याज्यां वौषडित्यन्तामनुच्छ्वसन्नेव पठेत्। उच्छ्वसन्नेव पिपठिषेच्चेदर्धर्चे यज्वेत्यन्त उच्छ्वसन्नेव पठेत्। नान्यत्रोच्छ्वासः कर्त्तव्यः। होत्रा वौषडित्युक्तेऽध्वर्युः स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं हविः स्थगयन्निव स्रुक्पार्श्वेन तद्धविरहिंसन् अग्नेरुत्तरार्धपूर्वार्धे इतराभिराहुतिभिरसंसक्तं हुत्वाऽऽज्यशेषमन्ववस्रावयेत्। ततो यजमानः 'अग्नये स्विष्टकृत इदं न

1 पौर्णमास्याम्—'ये३यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाडग्नेः प्रिया धामान्ययाट् (उपांशु) विष्णोः, (उच्चैः) प्रिया धामान्ययाडग्नीषोमयोः प्रिया धामान्ययाडिन्द्रस्य वैमृधस्य प्रिया धामान्ययाड् देवानामाज्यपानाम्' इत्यादि समानम्। असन्नयतो यजमानस्य, अमावास्यायां च 'ये३यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाडग्नेः प्रिया धामान्ययाट् (उपांशु) विष्णोः, (उच्चैः) प्रिया धामान्ययाडिन्द्राग्न्योः प्रिया धामान्ययाड् देवानाम्' इत्यादि समानम्। आपस्तम्बीययजमानस्य सन्नयदसन्नयतोऽमावास्यायामुपांशुयाजाभावाद्विष्णोः प्रियेत्युपांशु देवतानामकीर्तनं नास्ति।

2 ऋ० सं० ६।१५।१४

मम' इति त्यागं कृत्वा 'अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम्' इति सौविष्टकृतं हुतमनुमन्त्रयेत ।

### अपां निनयनम्

तदनन्तरमध्वर्युः प्रत्याक्रम्य स्वासन उपविश्य जुह्वामप आनीय 'वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । स नः पितरं पितामहं प्रपितामहं स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहा' इत्यन्तःपरिधि निनीयाऽऽयतने जुहूपभृ[1]तावासादयेत् । ततो यजमानः 'अग्नये वैश्वानरायेदं न मम' इति त्यागं कुर्यात् ।

### प्राशित्रहरणम्

ततोऽध्वर्युः प्राशित्रह[2]रणपात्रमुपस्तीर्याऽऽग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा भङ्क्त्वाऽप उपस्पृश्याङ्गुष्ठेनोपमध्यमया[3] चाङ्गुल्या व्यूह्य 'अज्यायो यवमात्रादाव्याधात् कृत्यतामिदम् । मा रूरुपाम यज्ञस्य शुद्धं स्विष्टमिदं हविः' इत्याग्नेयस्य पुरोडाशस्य मध्याद्यवमात्रं पिप्प[4]लमात्रं वा प्राशित्रमवदाय प्राशित्रपात्रे निदध्यात् । ततो हस्तं प्रक्षालयेत् । प्राशित्रावदानात् परं यजमानः 'अग्निर्मा दुरिष्टात् पातु सविताऽघशंसाद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषम्' इति प्राशित्रमवदीयमानमनुमन्त्रयेत ।

---

1 पितृप्रीत्यर्थत्वेन पित्र्यत्वात् प्राचीनावीतमिति हिरण्यकेशिनामभिप्रायः । भाष्यकारमते तु वैश्वानररूपाग्न्यभिधानान्न तदिति । परं हिरण्यकेशिसूत्रे प्राचीनावीतं न दृश्यते ।

2 ब्रह्मणे भक्षणार्थं दीयमानस्य हविर्भागस्य कस्यचित् प्राशित्रहरणमिति संज्ञा ।

3 पौर्णमास्यामङ्गुष्ठेनोपमध्यमयेत्यारभ्य हस्तं प्रक्षालयेदित्यन्तं प्रतिपुरोडाशमावर्तयेत् । अमावास्यायामसोमयाजिनोऽप्येवमेवेति ज्ञेयम् ।

4 अत्र पिप्पलशब्देन फलं बोध्यम् । व्रीहिप्रमाणमात्रमित्यर्थः ।

ततोऽध्वर्यु रभिघार्यानभिघार्य वा प्राशित्रमग्रेणाऽऽहवनीयं ब्रह्मणे प्रयच्छेत् ।

ततो ब्रह्मा[1] 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इति प्राशित्रमाह्रियमाण-मीक्षित्वा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति तदञ्जलिना प्रतिगृह्य 'पृथिव्यास्त्वा नाभौ सादया-म्यदित्या उपस्थे' इत्यन्तर्वेदि कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा 'अग्नेष्ट्वाऽऽस्येन प्राश्नामि बृहस्पतेर्मुखेन' इति दन्तैरपीडयन् प्राश्याचम्य 'सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शमयन्तु चक्षुः श्रोत्रं प्राणान् मे मा हिंसीः' इत्यपः पीत्वाऽऽचम्य 'इन्द्रस्य त्वा जठरे दधामि' इति नाभिमालभ्य प्राशित्रहरणं प्रक्षाल्य प्रक्षालितेनानेन प्राशित्र-हरणेनाऽऽत्मानमभिमुखेन हस्तेन च तथाभूतेनाऽऽत्मनः पुरतस्त्रिरपः सिञ्चेत् ।

---

1 आपस्तम्बब्रह्मा 'मित्रस्य त्वा चक्षुषा प्रेक्षे' इति प्राशित्रमवदीयमानं प्रेक्ष्य 'ऋतस्य पथा पर्येहि' इत्यग्रेणाऽऽहवनीयं परिह्रियमाणं प्रेक्ष्य 'सूर्यस्य त्वा चक्षुषा प्रतिपश्यामि' इत्यासन्नमाह्रियमाणं प्रेक्ष्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति तदञ्जलिना प्रतिगृह्य 'पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे' इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्ड सादयित्वा 'अदब्धेन त्वा चक्षुषाऽवेक्षे' इत्यवेक्ष्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदाय 'अग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामि' इति प्राशित्रं दन्तोष्ठाभ्यामनभिमृद्य निगीर्य 'या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा' इत्यद्भिः प्राशित्रमन्तर्णीत्वाऽऽचम्य 'घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामि' इति नाभिदेशमभिमृश्य 'वाङ् म आसन्' इति मुखमभिमृश्य 'नसोः प्राणः' इति नासिके अभिमृश्य 'अक्ष्णोश्चक्षुः' इति चक्षुषी अभिमृश्य 'कर्णयोः श्रोत्रम्' इति श्रोत्रे अभिमृश्य 'बाह्वोर्बलम्' इति बाहु अभिमृश्य 'ऊर्वोरोजः' इत्यूरू अभिमृश्य 'अरिष्टा विश्वान्यङ्गानि तनुस्तनुवा मे सह नमस्ते अस्तु मा मा हिंसीः' इत्यवशिष्टान्यभिमृश्याप उपस्पृश्य प्रक्षाल्य प्राशित्रमद्भिः पूरयित्वा 'दिशो जिन्व' इति पराचीनमेकप्रयत्नेन निनीय 'मां जिन्व' इति पुनरपो गृहीत्वा हृदयाभिमुखं निनयेत् ।

## इडावदानम्

ततोऽध्वर्युः इडापात्रमुपस्तीर्य 'म[1]नुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसम्भिन्दन्नवद्याम्येकतोमुखाम्' इत्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात् प्रथममवदानमवदायेडायामवधायावदानदेशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयमवदायेडायामवधाय पश्चार्धात्तृतीयं पञ्चावत्तिनः कृतेऽवदध्यात् । पूर्वार्धाच्च यजमानभागमिडायामवधाय हस्तं प्रक्षाल्य 'मनुना दृष्टाम्' इत्यादिमन्त्रेण श्रृतस्य दक्षिणार्धात् प्रथममवदानं स्रुवेणाऽऽदायेडायामवधायावदानदेशयोर्मध्ये स्थिताद्धविरंशाद् द्वितीयं स्रुवेणाऽऽदायेडायामवधाय पश्चात् पञ्चावत्तिनां तृतीयमवदध्यात् । पूर्वार्धाच्च यजमानभागं स्रुवेण पात्रान्तरे गृहीत्वेडायां निधाय 'मनुना दृष्टाम्' इति मन्त्रेण दध्नो दक्षिणार्धात् प्रथममवदानं स्रुवेणाऽऽदायेडायामवधायावदानदेशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयं स्रुवेणाऽऽदायेडायामवधाय पश्चार्धात् पञ्चावत्तिनां तृतीयमवदध्यात् । पूर्वार्धाच्च यजमानभागं स्रुवेण पात्रान्तरे गृहीत्वेडायां निद[2]ध्यात् । सौविष्टकृतावदानादैडावदानं ज्यायः कार्यम् ।

## इडोपाह्वानम्

तदनन्तरं यजमानः 'सुरूपवर्षवर्ण एहि'[3] इतीडामवदीयमानामनुमन्त्रयेत । ततोऽध्वर्युरवत्तं पुरोडाशीयं यजमानभागमीषद्दीर्घं

---

1 पौर्णमास्यां 'मनुना दृष्टामि'ति मन्त्रं प्रतिपुरोडाशमावर्त्यान्यत् सर्वं हस्तं प्रक्षाल्येत्यन्तं कुर्यात् । असन्नयतोऽमावास्यायामप्यैन्द्राग्नं पुरोडाशं प्रत्येवमेव मनुना दृष्टामित्यादि कार्यम् ।

2 पौर्णमास्यां सर्वपुरोडाशेभ्योऽवत्तं यजमानभागमिति विशेषः । अमावास्यायामसन्नयतोऽप्येवमेव ।

3 'सुरूपवर्षवर्ण एहीमान् भद्रान् दुर्यां अभ्येहि मामनुव्रतान्यु शीर्षाणि मृढ्व मृड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टि तेऽशीयोपहूत उपहवं तेऽशीय' (तै० सं० १।६।३।१) इति समग्रो मन्त्रः ।

कृत्वाऽऽज्येन सर्वतोऽञ्जनं कृत्वा ध्रुवायाः समीप गमयित्वा तथा च शृतदध्नोर्यजमानभागमाज्येन सर्वतोऽङ्क्त्वा ध्रुवायाः समीपं गमयित्वाऽभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमिडामनुत्सृजन्नेव पश्चाद् गत्वा होतुर्दक्षिणत आसीनः स्वयं प्राङ्मुखो भूत्वा होतुः प्रदेशिन्या उत्तमे पर्वणी स्रुवेणाञ्ज्यात् । होता इडामादाय तयाऽध्वर्युमतिक्रामन्तं दक्षिणतो हृत्वेडामन्तराऽध्वर्युमात्मानं च कुर्यात् । अपि वाऽध्वर्युः होत्रे इडामदत्त्वा प्राचीमिडामपोह्य स्वयं पश्चाद् गत्वा होतुर्दक्षिणत उदङ्मुख आसीनः स्रुवेण होतुः प्रदेशिन्याः पर्वणी अञ्ज्यात् ।

ततो होता 'वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामि' इत्युत्तरपर्वलेपमुत्तरे ओष्ठे अभ्यात्मं निमृज्य 'मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामि' इत्यधरपर्वलेपमधरे ओष्ठे निमृज्योदकं स्पृष्ट्वाऽञ्जलिनेडां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादिडाया दक्षिणपाणिमुत्तानाङ्गुलिमुपधायावान्तरेडामध्वर्युणाऽवदापयीत । ततोऽध्वर्युः होतुः पुरस्तात् प्रत्यङ्मुख आसीन उपसृष्टोदकस्य होतुर्हस्ते इडागताज्यलेपादुपस्तीर्यावान्तरेडामवदायावदध्यात् । स्वयं होता अङ्गुल्यङ्गुष्ठयोर्मध्येन प्रदेशेन इडाया अवान्तरेडामाददीत । तदनन्तरमध्वर्युः इडागताज्यलेपादभिघारणं कुर्यात् । पञ्चावत्तिनां कृते द्विरभिघारणं कुर्यात् ।

ततो होता प्रत्यालब्धाङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्याङ्गुलीरमुष्टिं[1] कृत्वा अवान्तरेडासहितेन दक्षिणेन पाणिना दक्षिणत इडां परिगृह्याऽऽस्यसम्मितां प्राणसम्मितां वा कृत्वा 'इडोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इडा ह्वयतां सह दिवा बृहताऽऽदित्येनेडोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इडा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इडा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेडोपहूता सह पृथिव्या रथन्तरेणाग्निनोपास्माँ इडा ह्वयतां सह पृथिव्या रथन्तरेणाग्निना उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता

---

1 अमुष्टिं कृत्वा नाम अङ्गुलिभ्यो बहिरङ्गुष्ठमकृत्वेत्यर्थः ।

दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखाभक्ष उप मां सखाभक्षो ह्वयतामुपहूतेडा वृष्टिरुप मामिडा वृष्टिर्ह्वयताम्' इत्युपांशूपहूय 'इडोपहूतोपहूतेडोपास्माँ इडा ह्वयतामिडोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं **दैव्या अध्वर्यव उपहूता** उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः' इत्युच्चैरिडामुपह्वयीत । ततोऽध्वर्युयजमानौ उपहूयमाना-मिडामन्वारभेयाताम् । ततोऽध्वर्युः 'दैव्या अध्वर्यव उपहूताः' इति होतुर्वाक्यमभिज्ञाय 'उपहूतः पशुमानसानि' इति जपेत् ।

इडोपाह्वानजपः

ततो यजमानः 'भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहि इड एहि सूनृत एहि' इतीडाया उपांशूपहवे सप्त देवगवीर्जपित्वा 'चिदसि मनासि धीरसि रन्ती रमतिः सूनुः सूनरी' इत्युच्चैरुपहवे सप्त मनुष्यगवीर्ज-पित्वा 'देवीर्देवैरभि मा निवर्तध्वं स्योना स्योनेन घृतेन मा समुक्षत नम इदमुपदं भिषगृषिर्ब्रह्मा यद्दे समुद्रादुदर्चन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्' इति चोच्चैरुपहवे जपित्वा 'वायविडा ते माता' इति होतारमीक्षमाणो वायुं मनसा ध्यात्वा 'उपहूतोऽयं यजमानः' इति होतुर्वाक्यममभिज्ञाय 'उपहूतः पशुमानसानि [1]सा मे सत्याशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवं रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवान् अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टानोऽसि जुष्टिं ते गमेयम्' 'आ[2]शीर्म ऊर्जमुत

1 तै० सं० १।६।३

2 तै० सं० ३।२।८।५

वमिषं दधातु द्रविणं सवर्चसम् । सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र अन्याँ अधरान् सपत्नान्' इति जपित्वा 'इडाया अहं देवयज्यया भूयासम्' इत्युपहूतामिडामनुमन्त्र्य 'इडा धेनुः सहवत्सा न गैं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडा- ाँ आगात्' इति भक्षायाऽऽह्रियमाणामनुमन्त्रयेत ।

## इडाभक्षणं मार्जनञ्च

ाजमानपञ्चमा ऋत्विज इडायाः स्वं स्वं भागं भक्षणार्थं गृह्णीयुः । होता इडामुपहूय 'इळ भागं जुषस्व नः पिन्व गा जिन्वार्वतो पोषस्येशिषे तस्य नो रास्व । तस्य नो दास्तस्यास्ते भागमशीमहि । मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः' ( सर्वपुरुषा इति वा ) इति गावान्तरेडां प्राश्याचम्य तूष्णीमिडाभागं भक्षणार्थं गृहीतं प्राश्याचम्य मार्जनात् वाग्यत आसीत । ब्रह्मा[1]पि तूष्णीं स्वीयमिडाभागं याचम्य मार्जनं यावत् वाग्यम आसीत । अन्ये अध्वर्युयज- ाग्नीध्रा 'इळे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते ावाणः स्याम सर्वात्मानः सर्वगणाः' इतीडायाः स्वं स्वं भागं ायाचम्या मार्जनात् वाग्यता आसीरन् । ततोऽध्वर्युयजमानाग्नीध्राः ो ज्योतिर्जुषताम्' इति मन्त्रेणान्तर्वेदि स्थिते प्रस्तरे मा[2]र्जनं कुर्युः । ा प्रतिपुरुषं मन्त्रावृत्तिः कार्या । होतृब्रह्माणा[3]वेवं मार्जयतः ।

---

1 आपस्तम्बब्रह्मा तु 'इडे भागं जुषस्व नो जिन्व मा जिन्वार्वतः । तस्यास्ते ब्रवाणः स्याम सर्वात्मानः सर्वगणाः' इति मन्त्रेण स्वभागं प्राश्नीयात् । अन्यत् समानम् ।

2 अन्तर्वेदि स्थिते प्रस्तरे जलमासिच्य तस्याधस्ताद्धस्तेन जलं गृहीत्वा शिरस्या- नमेव मार्जनम् । आहवनीयपरिस्तरणैरञ्जलिमुदकधारणसमर्थं कृत्वाऽन्येन केनचित् इकारिणाऽपामासेचनमेव मार्जनमित्याश्वलायनः ।

3 आपस्तम्बब्रह्मा—'मनो ज्योतिर्जुषताम्' इति मन्त्रोच्चारणपूर्वकमन्तर्वेदि- थते प्रस्तरे मार्जयेत् ।

## चतुर्धाकरणम्

ततोऽध्वर्यु[1]राग्नेयं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं कुर्यात् । बर्हिषदं वा कृत्वा चतुर्धा कुर्यात् । ततो यजमानः 'ब्रह्म पिन्वस्व । ददतो मे मा क्षायि । कुर्वतो मे मोपसदत् । दिशां क्लृप्तिरसि । दिशो मे कल्पन्ताम् । कल्पन्तां मे दिशः । दैवीश्च मानुषीश्च । अहोरात्रे मे कल्पेताम् । अर्धमासा मे कल्पन्ताम् । मासा मे कल्पन्ताम् । ऋतवो मे कल्पन्ताम् । संवत्सरो मे कल्पताम् । क्लृप्तिरसि कल्पतां मे' इत्यध्वर्युणा चतुर्धा कृतं बर्हिषि सन्नं पुरोडाशं तन्त्रेणाभिमृश्य 'आशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रध्न पाहि भजतां भागी भागं माऽभागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात् पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनाम् । निर्भक्तोऽब्राह्मणो नेहाब्राह्मणस्यास्ति' इति सकृदुक्तेन मन्त्रेण प्रतिदिशं विभागपूर्वकं गमयित्वा 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति प्रत्येकं विविधमादि[2]श्य 'उपहूतो द्यौः पृथिवी । उप मां द्यौः पिता ह्वयताम् । अग्निराग्नीध्रादायुषे वर्चसे । जीवात्वै पुण्याय । उपहूता पृथिवी माता । उप मां माता पृथिवी ह्वयताम् । अग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय' इत्याग्नीध्रभागस्य पुनर्व्यूहनं कुर्यात् । इदं व्यूहनमाग्नीध्रभागस्य मन्त्रपूर्वकं वैशेषिकमिति सूत्रकाराभिप्रायः ।

ततोऽध्वर्युः 'इदं यजमानस्य' इति यजमानभागं निर्दिश्य कस्मिंश्चिदेकस्मिन् पात्रे प्रथमं सकृदुपस्तीर्य आग्नीध्रभागं द्वेधा कृत्वैकं भागं पात्रेऽवधाय पुनरुपस्तीर्यापरभागमवधाय द्विरभिघार्य आग्नीध्राय तत्

---

1 पूर्वं निरूपितमाधानप्रकरणे । तृतीयाध्यायप्रथमपादे पञ्चदशाधिकरणे विषयोऽयं विचारितः पूर्वमीमांसायाम् ।

2 'इदमग्नीधः, इदं ब्रह्मणः' इत्यग्नीत्प्रथमान् वर्त्विजो भागित्वेनादिशेत् । यद्वा 'इदं होतुः, इदं ब्रह्मणः' इति होतृप्रथमानृत्विजो विविधमादिशेदिति मतान्तरं सूत्रकारेणोपन्यस्तम् ।

पात्रं प्रयच्छेत् । अपि वा कस्मिंश्चित् पात्रे द्विरुपस्तीर्य द्विराधाय द्विरभिघार्य षडवत्तं सम्पाद्य तत् पात्रमग्नीधे प्रयच्छेत् । आग्नीध्रोऽपि विहाराद्बहिर्गत्वा पात्रस्थं स्वभागं गृहीत्वा 'अग्नेराग्नीध्रमस्यग्ने: शामित्रमसि नमस्ते अस्तु मा मा हिंसी:' इति भक्षयित्वा अप आचामेत् । ततोऽध्वर्युर्यथास्थानमासीनाभ्यां ब्रह्मयजमानाभ्यां तयोर्भागौ वेदेन हृत्वा प्रयच्छेत् । वेदादन्येन पात्रेण होतुर्भागं ततोऽन्येन चात्मनो भागं परिहरेत् । अध्वर्युप्रदत्तं स्वभागं ब्रह्मा प्राशित्रहरणे निदध्यात् । ततो यजमान: प्राशित्रहरणस्य पश्चात् कुशेषु स्वकीयं भागं निदध्यात् । अयं नियम आपस्तम्बीययजमानस्य नास्ति । अयमाश्वलायनीययजमानस्येति वेदितव्यम् । तदनु अध्वर्यु: स्रुवेण होतुर्भागं होत्रे प्रयच्छेत्तथा स्वभागं जुह्वा स्वस्मै प्रयच्छेत् । होता[1] तूष्णीं भक्षयित्वा अप आचामेत् ।

### अन्वाहार्यचरु:

ततोऽध्वर्यु: 'अन्तरिक्षस्य भागोऽसि' इति स्वभागं प्राश्याचम्य दक्षिणाग्ना[2]वन्वाहार्यं [3]महान्तमपरि[4]मितमोदनं पचेत् । क्षीरे वा पचेदित्येके मन्यन्ते । तत आश्वलायनीयब्रह्मा[5] दक्षिणाग्नौ स्थितमन्वाहार्यं गत्वा 'प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वानक्षितिरसि मा मे क्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च' इत्यन्वाहार्यमवेक्ष्य 'प्राणापानौ मे पाहि कामाय

1 आपस्तम्बहोता तु 'पृथिव्यै भागोऽसि' इति भक्षयेत् ।

2 ऋत्विग्भ्यो दक्षिणारूपेण देयो दक्षिणाग्नौ पक्व ओदनोऽन्वाहार्य: ।

3 यथर्त्विग्भ्य: स पर्याप्तो भवति ।

4 प्रस्थादिना तण्डुलमानप्रतिषेध एवात्रापरिमितशब्देनोच्यते ।

5 आपस्तम्बब्रह्मा तु 'ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा हुताद्य मा मा हिंसीरहुतो मह्यं शिवो भव' इत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशेत् ।

त्वा' इत्यस्पृशन्नन्वाहार्यमवघ्राय अङ्गुष्ठानामिकाभ्यां पुलाककलामात्रमन्वाहार्याद् गृहीत्वा प्राशित्रहरणस्थस्वभागे निदध्यात् । अध्वर्युस्तमन्वाहार्यमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासादयेत् ।

### अन्वाहार्याभिमर्शनम्

यजमानश्च 'ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपसदत्प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुस्मिंल्लोके'[1] 'इयं स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः । स दाधार पृथिवीमन्तरिक्षं दिवञ्च तेनौदनेनातितराणि मृत्युम्' इति मन्त्रद्वयेनान्वाहार्यमासन्नमभिमृशेत् । ततोऽध्वर्युः 'दक्षिणसञ्च उपहर्तवै'[2] इति यजमानं प्रेष्येत् ।

### अन्वाहार्यदानम्

प्रेषितो यजमानः उत्तरतः स्थितानध्वर्युप्रभृतीनाह—'दक्षिणत एत' इति । ततः स 'ब्राह्मणा अयं व ओदनः' इति तेभ्यश्चतुर्भ्यो दक्षिणसञ्चोऽन्वाहार्यं दद्यात् । अध्वर्युराग्नीध्रश्च 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणे ब्रह्मण ओदनम् । तेनामृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिग्रहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामं समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु' इत्यन्वाहार्यं प्रतिगृह्णीयाताम् । होतृब्रह्माणौ[3] 'क इदं कस्मा

---

1 तै० सं० १।६।३।३

2 'दक्षिणतः स्थितेभ्य ऋत्विग्भ्यो दक्षिणा त्वयोपहर्तव्या' इति वाक्यस्यार्थः ।

3 आपस्तम्बब्रह्मापि देवस्य त्वेत्यारभ्य गृह्णात्वित्यन्तेन मन्त्रेण प्रतिगृह्णीयात् ।

अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु' इत्यन्वाहार्यं प्रतिगृह्णीयाताम् ।

ततो यजमानः 'उत्तरतः परीत' इति दक्षिणतः स्थितानृत्विजः सम्प्रेष्येत् । संप्रैषानुसारमध्वर्युः हविःशेषानुद्वास्य 'ब्रह्मन् प्रस्थास्यामः, समिधमाधायाग्नीत् परिधींश्चाग्निञ्च सकृत् सकृत् सम्मृड्ढि' इति ब्रह्माणमाग्नीध्रं च प्रेष्येत् । ततो ब्रह्मा[1] 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि । भूर्भुवः स्वबृर्हस्पतिप्रसूतः' इति जपित्वा 'ओं प्रतिष्ठ' इत्यतिसृजेत् । तदनन्तरं ब्रह्मणाऽनुज्ञात आग्नीध्रः 'एषा ते अग्ने समित्तया वर्धस्व चाऽऽच प्यायस्व वर्धताञ्च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहा' इत्यानुयाजिकीं समिधमादध्यात् । ततो यजमानः पूर्वोक्तेनैव मन्त्रेणाधीयमानामानुयाजिकीं समिधमनुमन्त्र्य 'अग्नय इदं न मम' इति त्यागं कृत्वा 'यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन् । प्रजाञ्च तस्य मूलञ्च नीचैर्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्टयः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन । यो मां द्वेष्टि जातवेदो यञ्चाहं द्वेष्मि यश्च माम् । सर्वांस्तानग्ने सन्दह यांश्चाहं द्वेष्मि ये च माम्' इत्याहितायां समिधि अग्निमनुमन्त्रयेत । तदनु आग्नीध्रः पूर्ववत् परिधीन् सकृत् सकृत् सम्मृज्य 'अग्ने वाजजिद्वाजं त्वा ससृवांसं वाजं जिगिवांसं वाजिनं वाजजितं वाजजित्यायै सम्माज्म्र्यग्निमन्नादमन्नाद्याय' इति सकृदग्निं प्राञ्चं सम्मृज्यात् । ततोऽध्वर्युरिध्मसन्नहनान्यद्भिः संस्पृश्य 'यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा

---

1 आपस्तम्बब्रह्मा तु 'देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि' इत्युपांशूक्त्वा 'ओं प्रतिष्ठ' इत्युच्चैरनुजानीयात् ।

हिंसीरेतदस्तु हुतं तव स्वाहा' इत्यग्नौ इध्मसन्नहनानि प्रक्षिप्याप उपस्पृशेत् । उत्करे अग्निशालायां बलजायां[1] परोगोष्ठे[2] परोगव्यूतौ[3] तानि प्रक्षिपेत् । प्रक्षेपानन्तरं यजमानः 'भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम' इति त्यागं कृत्वाऽप उपस्पृश्य 'वेदिर्बर्हिः शृतं हविरिध्मः परिधयः स्रुचः । आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः । सम्मे सन्नतयो नमन्तामिध्मसन्नहने हुते' इतीध्मसन्नहनानि हुतान्यनुमन्त्र्य 'महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता'[4] इति सप्तहोतृमन्त्रं पुरस्तादुपरिष्टाद्वा अनूयाजानां वदेत् ।

## अनूयाजाः

अध्वर्युरुपभृत्यनूयाजार्थं पूर्वमवशेषितमाज्यं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उदङ्मुखः स्थित्वा 'आ३श्रा३वय' इत्याग्नीध्रं सम्प्रेष्येत् । आग्नीध्रेण 'अस्तु श्रौ३षट्' इति पूर्ववत् प्रत्याश्राविते-ऽध्वर्युः 'देवान् यज' इति प्रथमानूयाजार्थं होतारं प्रेष्येत् । एवं प्रेषितो होता 'देवं[5] बर्हिर्वसुवने वसुधेयस्य वेतु ३, वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । वषट्कारान्तेऽध्वर्युः आघारसम्भेदाग्रदेशपूर्वभागे प्रथममनूयाजं

---

1 बलजा तृणराशिर्धान्यराशिर्वा वंशेषु भवः संपुटको वेति भाष्यकाराशयः ।

2 गोष्ठात् परतो यो देशः स परोगोष्ठः ।

3 गव्यूतिर्गोमार्गः, परोगव्यूतिः परतो गोमार्गाद् यो देशः । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ।

4 तै० आ० ३।५

5 इयमनूयाजस्य याज्या । तथाप्यस्याः पुरतः 'ये यजामहे' इत्यागूर्न वक्तव्या । एवमेव सर्वासामनूयाजयाज्यानाम् । 'आगूर्याज्यादिरनुयाजवर्जम्' (आ० श्रौ० १।५।४) इत्याश्वलायनसूत्रेण सर्वासामनुयाजवर्जितानां याज्यानामादावागूर्भवतीति ।

समिधि जुहुयात् । तदनु यजमानः 'अग्नय इदं न मम' इति त्यागं कृत्वा 'बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम्' इति हुतमनूयाजमनुमन्त्रयेत ।

ततोऽध्वर्युणा आग्नीध्रेण च पूर्ववत् आश्रावणप्रत्याश्रावणे कृतेऽध्वर्युः 'यज' इति द्वितीयानूयाजार्थं होतारं प्रेष्येत् । एवं प्रेषितो होता 'देवो नराशंसो वसुवने वसुधेयस्य वेतू ३, वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । ततो होत्रा वौषडित्युक्तेऽध्वर्युराघारसम्भेदस्य पूर्वभागे प्रथमानूयाजात् प्रत्यक्समिधि द्वितीयानूयाजं जुहुयात् । तदनु यजमानः 'अग्नय इदं न मम' इति त्यागं कृत्वा 'नराशंसस्याहं देवयज्यया पशुमान् भूयासम्' इति हुतमनूयाजमनुमन्त्रयेत ।

ततः पूर्ववदाश्रावणप्रत्याश्रावणे कृते सत्यध्वर्युः 'यज' इति होतारं प्रेष्येत् । एवं प्रेषितो होता 'देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाडयाँ अपि प्रेर्ये ते होत्रे अमत्सत[1] तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३, वौ३षट्' इति वषट्कारमुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । होत्रा वौषडित्युक्तेऽध्वर्युर्द्वितीयानूयाजस्यापरेणोत्तममनूयाजमारभ्येतरावनूयाजौ संसर्जयन् प्राक्संस्थं जुहुयात् । ततो यजमानः 'अग्नय इदं न मम' इति त्यागं कृत्वा 'अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम्' इति हुतमनूयाजमनुमन्त्रयेत ।

## स्रुग्व्यूहनम्

ततोऽध्वर्युः प्रत्याक्रम्याऽऽयतने स्रुचौ (जुहूपभृतौ) सादयित्वा 'वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्' इति दक्षिणेन हस्तेनोत्तानेन

---

1 'अमत्सत' इत्यत्रावसायानवसाय वा यजेत् ।

सप्रस्तरां जुहूं किञ्चिदुद्यम्य 'अथा सपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः' इति सव्येन हस्तेनोपभृतमधो नियम्य 'उद्ग्राभं च' इति जुहूं किञ्चिदुद्यम्य 'निग्राभं च' इति दक्षिणेन हस्तेनोपभृतं निगृह्य 'ब्रह्म देवा अवीवृधन्' इति दक्षिणेन हस्तेन जुहूं प्राचीं गमयित्वा 'अथाऽसपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्' इति सव्येन हस्तेनोपभृतं प्रतीचीं बहिर्वेदि निरस्याप उपस्पृश्य तां प्रोक्ष्यैनामभ्युदाहरेत् । ततो यजमानः अध्वर्युणा सह वाजवत्यावृचौ[1] जपेत् । अत्राध्वर्युयजमानयोर्जपः सूत्रकाराभिमतो द्रष्टव्यः ।

## परिधिसमञ्जनम्

ततोऽध्वर्युः 'वसुभ्यस्त्वा' इति जुह्वाज्यलेपेन मध्यमं परिध्येकदेशमञ्ज्यात् । अञ्जनसमनन्तरमेव यजमानः 'वसून् देवान् यज्ञेनापिप्रेम्' इत्यज्यमानं मध्यमं परिधिमनुमन्त्र्य 'वसुभ्य इदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युः 'रुद्रेभ्यस्त्वा' इति जुह्वाज्यलेपेन दक्षिणं परिध्येकदेशमञ्ज्यात् । अत्रापि यजमानः 'रुद्रान् देवान् यज्ञेनापिप्रेम्' इत्यज्यमानं दक्षिणं परिधिमनुमन्त्र्य 'रुद्रेभ्य इदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युः 'आदित्येभ्यस्त्वा' इति जुह्वाज्यलेपेनोत्तरं परिध्येकदेशमञ्ज्यात् । अत्रापि यजमानः 'आदित्यान् देवान् यज्ञेनापिप्रेम्' इत्यज्यमानमुत्तरं परिधिमनुमन्त्र्य 'आदित्येभ्य इदं न मम' इति त्यागं कुर्यात् । ततोऽध्वर्युर्वेद्यामेव बहिः प्रस्तराज्जुहूं सादयित्वा 'सं जानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम्' इति विधृतीभ्यां सह प्रस्तरमपादाय बर्हिषि विधृती अपिसृज्य 'अक्तं रिहाणा वियन्तु वयः'[2] इति प्रस्तराग्रं जुह्वामङ्क्त्वा 'प्रजां योनिं मा निर्मृक्षम्'[3] इत्युपभृति प्रस्तरमध्यमङ्क्त्वा 'आप्यायन्ता-

---

1 'वाजस्य मा' इत्यारभ्य 'विषूचीनान् व्यस्यताम्' इत्यन्तावृचौ वाजवतीशब्देनोच्येते ।

2 तै० सं० १।१।१३।१

3 तै० सं० १।१।१३।१

माप ओषधयः' इति प्रस्तरमूलं ध्रुवायामञ्ज्यात् । एवं वारत्रयं कर्तव्यम् । अत्र मन्त्रमात्रे विकल्पा बहव आपस्तम्बेन कीर्त्तिताः । अञ्जनसमनन्तरं यजमानः 'समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा' इत्यज्यमानं प्रस्तरमनुमन्त्रयेत ।

### सूक्तवाकः प्रस्तरप्रहरणञ्च

ततोऽध्वर्युः 'आयुषे त्वा' इत्यक्तस्य प्रस्तरस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां सह शाखया[1] प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीन आग्नीध्रमाश्राव्य तेन पूर्ववत् प्रत्याश्राविते 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय[2] सूक्ता ब्रूहि' इति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा

1 पौर्णमास्यां तथाऽसोमयाजिनोऽप्यमावास्यायां शाखाया अभावात् केवलं प्रस्तर गृहीत्वैव ।

2 सुष्ठूक्तं वदतीति सूक्तवाकः—'इदं द्यावापृथिवी' त्यारभ्य निर्दिष्टो मन्त्रविशेषः। अनेन यावत्यो देवता इष्टास्तास्सर्वा अपि निर्दिश्यन्ते। प्रथमावाहननिगदे या देवता निर्दिष्टाः ताः सर्वा अप्यनेन कीर्त्यन्ते। अस्मिन्मन्त्रे पौर्णमाससम्बन्धिन्यो दर्शसम्बन्धिन्यश्च देवता अविभागेन समाम्नाताः। तत्र कालद्वयसम्बन्धिनीर्देवता विभज्य पृथक् पृथक् तत्तत्काले मन्त्रविनियोगो मीमांसायां ३-२-६ अधिकरणे निर्णीतः। एतन्मन्त्रपठनकाल एव 'सूक्तवाकेन प्रस्तरं प्रहरति' इति विधिविहितं प्रस्तरप्रहरणं क्रियते। प्रहरणमिदं यागरूपमिति सिद्धान्तितं मीमांसायाम् (३–२–५) अयं यागः प्रतिपत्तिरूपः ।

शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि' इत्यवसाय 'अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽक्रत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽक्रत । (उपांशु) विष्णुः, (उच्चैः) इदं हविरजुषतावीवृधत महो ज्यायोऽक्रत[1] । महेन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽक्रत । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽक्रत । अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानो यज्ञेश्वरशर्मा रौहिणः' इति यजमाननाम[2] निर्दिश्य 'आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अहसस्पातामेह गतिर्वामस्येदं नमो देवेभ्यः' इति ब्रूयात् । होत्रा अनूच्यमाने सूक्तवाके[3] अध्वर्युः 'मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरय'[4] इति तिर्यञ्चं हस्तं धारयन् कर्षन्निव सह शाखया प्रस्तरमाहवनीये प्रहरेत् ।

---

1 पौर्णमास्याम् 'अग्नीषोमाविद हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताभिन्द्रो वैमृध इदं हविरजुषतावीवृधत महो ज्यायोऽक्रत' इत्येतदुपांशुयाजदेवतायाः कीर्तनानन्तरं देवा आज्यपेत्यादि समानमुच्चारयेत् । एवममावास्यायामसोमयाजी उपांशुयाजदेवतायाः कीर्तनानन्तरम् 'इन्द्राग्नी इद हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्युक्त्वा 'देवा आज्यपा' इत्यादि समानं ब्रूयात् ।

2 अत्र यजमाननाम व्यावहारिकं नाक्षत्रं च ब्रूयात् । तथा होतुर्गुरुश्चेद्यजमानः स्यात्तदा तत्सन्निधावुपांशु तन्नामनी ब्रूयात् ।

3 सूक्तवाको नाम तत्रेष्टिपशुषु इष्टदेवतानुसंकीर्तनार्थः 'इदं द्यावापृथिवी' इत्यादि 'नमो देवेभ्यः' इत्यन्तोऽनुवाकः स च होत्रा पठनीयः ।

4 तै० सं० १।१।१३।१ ; अस्मिन् मन्त्रे स्वाहाकारो न कर्त्तव्यः । जुह्वां प्रस्तरं प्रहरन्न कम्पनमवाचीनकम्पनं विचालनं वा कुर्यात् । प्रहरणावसरे यथाऽग्निमतीत्याग्रं गतं न भवति तथा प्रहरेत् ।

पौर्णमास्यां तु सान्नाय्याभावात् शाखाभावेन केवलं प्रस्तरमेवाहवनीये प्रक्षिपेत्। अमावास्यायामसोमयाजिनोऽपि सान्नाय्याभावात् शाखा-प्रहरणं नास्ति किन्तु केवलं प्रस्तरप्रहरणमेव। प्रहरणानन्तरं यजमानः 'अग्नय इदं न मम। अग्नेरहमुज्जितिमनूज्जेषम्। सोमायेदं न मम। सोमस्याहमुज्जितिमनूज्जेषम्। अग्नय इदं न मम। अग्नेरहमुज्जिति-मनूज्जेषम्। विष्णव इदं न मम[1]। महेन्द्रायेदं न मम। महेन्द्रस्याहमुज्जिज-मनूज्जेषम्। देवेभ्य आज्यपेभ्य इदं न मम। अग्नये स्विष्टकृते इदं न मम। अग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषम्' इति सूक्तवाकदेवता अनुमन्त्रयेत। यदा चास्य होता नाम गृह्णीयात्तदा 'एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम्'[2] 'सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा पण्यात् पण्यतराऽरेडता मनसा देवान् गम्याद्यज्ञो देवान् गच्छतु यज्ञो म आगच्छतु' इति सूक्तवाकमनुमन्त्रयेत। होतुराशी-र्वचनकाले न्यञ्चं हस्तं पर्यावर्तयन्नध्वर्युः 'अग्नीद्गमय' इत्याग्नीध्रं सम्प्रेष्येत्। एवं प्रेषित आग्नीध्रः 'रोहितेन त्वाऽग्निर्देवतां गमयतु। हरिभ्यां त्वेन्द्रो देवतां गमयतु। एतशेन त्वा सूर्यो देवतां गमयतु'[3] इत्येतैस्त्रिभिर्मन्त्रैस्त्रिरञ्जलिना यथोद्यतः सर्वः प्रस्तरोऽग्निं गमितः स्यात्तथोद्यम्य प्रहरेत्। ततो यजमान एतन्मन्त्रत्रयोच्चारणपूर्वकमाग्नी-ध्रेण प्रह्रियमाणं प्रस्तरमनुमन्त्रयेत।

---

1 पौर्णमास्यां 'विष्णव इदं न मम' इत्यतः परम् 'अग्नीषोमाभ्यामिदं न मम। अग्नीषोमयोरहमुज्जितिमनूज्जेषम्। इन्द्राय वैमृधायेदं न मम। इन्द्रस्य वैमृधस्याह-मुज्जितिमनूज्जेषम्। ततो 'देवेभ्य आज्यपेभ्यः' इत्यादि समानम्। अमावास्याया-मसोमयाजिनः 'विष्णव इदं न मम' इत्यनन्तरम् 'इन्द्राग्निभ्यामिद न मम। इन्द्राग्निर्योरहमुज्जितिमनूज्जेषम्' इति। ततो 'देवेभ्य आज्यपेभ्यः' इत्यादि समानम्। अमावास्यायामापस्तम्बीययजमानस्य विष्णुयागाभावप्रयुक्तो 'विष्णव इदं न ममे'त्य-स्याप्यभावः।

2 तै० सं० १।६।४।२

3 तै० सं० १।६।४।३

## तृणानुप्रहरणम्

अनन्तरमाग्नीध्रः 'अनुप्रहर' इत्यध्वर्युमाह । एवमुक्तोऽध्वर्युः यस्मात् प्रस्तरात्तृणमपात्तं तत् 'स्वगा तनुभ्यः' इत्याहवनीयेऽनुप्रहरेत् । यजमानश्च 'तनुभ्य इदं न मम' इति त्यागं कृत्वा 'दिवः खीलोऽवततः पृथिव्या अध्युत्थितः । तेना सहस्रकाण्डेन द्विषन्तं शोचयामसि । द्विषन्मे बहुशोच त्वोषधे मो अहं शुचम्' इति प्रस्तरतृणे प्रह्लियमाणे जपेत् । जपानन्तरमध्वर्युः 'एतदेतदेतत्' इति त्रिरङ्गुल्या तदेव तृणं निर्दिश्य 'आयुष्पा अग्नेऽस्यायुर्मे पाहि' इत्यग्निमभिमन्त्र्य 'ध्रुवाऽसि' इत्यन्तर्वेदि पृथिवीमभिमृशेत् । अनन्तरमाग्नीध्रः 'संवदस्व' इत्यध्वर्युमाह । ततोऽध्वर्युः 'अगानग्नीत्' इत्याग्नीध्रं पृच्छेत् । तत आग्नीध्रः 'अगन्' इत्यध्वर्युमाह । ततोऽध्वर्युः 'श्रा३वय' इत्याग्नीध्रमाह । आग्नीध्रः 'श्रौ३षट्' इत्यध्वर्युमाह ।

## शंयुवाकः

ततोऽध्वर्युः मध्यमं परिधिमन्वारभ्य 'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि' इति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे' इति शंयुवाकं ब्रूयात् । होत्राऽनूच्यमाने शंयुवाकेऽध्वर्युः 'यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै'[1] इति मध्यमं परिधिमाहवनीये प्रहृत्य 'यज्ञस्य पाथ उप समितम्' इति दक्षिणोत्तरौ परिधी युगपत् प्रहृत्य उत्तरार्धस्य परिधेरग्रमङ्गारेषूपगूहेत् । ततो यजमानः 'वि ते मुञ्चामि

---

1 तै० सं० १।१।१३।२

रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु' इति परिधिषु विमुच्यमानेषु जपित्वा 'अग्नय इदं न मम' इति त्यागं कृत्वा 'विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम्' 'यज्ञो नमस्ते यज्ञो नमो नमश्च ते यज्ञ । शिवेन मे सन्तिष्ठस्व । स्योनेन मे सन्तिष्ठस्व । सुभूतेन मे सन्तिष्ठस्व । ब्रह्मवर्चसेन मे सन्तिष्ठस्व यज्ञस्यर्धिमनु सन्तिष्ठस्व । उप ते यज्ञ नमः । उप ते नम उप ते नमः' इति जपेत् ।

## संस्रावहोमः

ततोऽध्वर्युः 'यजमानं प्रथत' इति परिधीनभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय 'संस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वं स्वाहा'[1] इति संस्रावे[2]णाभिजुहुयात् । होमानन्तरं यजमानः 'वसुभ्यो रुद्रेभ्य आदित्येभ्यः संस्रावभागेभ्य इदं न मम' इति त्यागं कृत्वा 'इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वा अथर्वभिः । तस्य मेष्टस्य वीतस्य द्रविणेहागमेः' इति संस्रावं हुतमनुमन्त्रयेत । अत्रैव सर्वं ऋत्विजो हविःशेषान् भक्षयेयुः ।

## पत्नीसंयाजसन्नाहः

भक्षणानन्तरमध्वर्युः जुहूपभृद्गतानाज्यलेपान् प्रक्षाल्य सस्रुवे जुहूपभृतावादध्यात् । तत्र होताऽध्वर्युणा दत्तं वेदं 'वेदोऽसि वेदो विदेय',

---

1 तै० सं० १।१।१३।२–३

2 जुहूपभृद्भ्यां सिच्यमान आज्यशेषः संस्रावः । तेन क्रियमाणो होमः संस्रावहोमः ।

इति मन्त्रेण गृह्णीयात् । आग्नीध्रश्च स्फ्यमाज्यस्थालीमुदकमण्डलुं चादद्यात् । ततोऽध्वर्यु रग्रेण गार्हपत्यं दक्षिणेनाऽऽग्नीध्रप्रथमो गच्छेत् । एवं होतापि 'उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु' इत्युत्थायोत्तरेण गार्हपत्यमाग्नीध्रप्रथमः प्रत्यग्गच्छेत् । स्वयमाग्नीध्रोऽग्रेण गार्हपत्यं होत्रध्वर्य्वोरग्रे गच्छेत् । ततोऽध्वर्यु: 'अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तम्'[1] इति कस्तम्भ्या[2] जुहूपभृतौ सादयित्वा 'धुरि धुर्यौ पातम्' इति युगधुरोः प्रोहेत् ।

यदि पात्रीतो निर्वापस्तदा पूर्वोक्ताभ्यां द्वाभ्यां यजुर्भ्यां स्फ्ये स्रुचावासादयेदिति विशेषः सूत्रकारेणाभिहितः । तत्रर्त्विजामुपवेशनप्रकारं सूत्रकारः प्रदर्शयति—अध्वर्यु रपरेण गार्हपत्यं दक्षिणत ऊर्ध्वज्ञुरुपविशेत् । होता त्वपरेण गार्हपत्यमध्वर्योरुत्तरत उपस्थेनोपविशेत् । आग्नीध्रस्तु अपरेण गार्हपत्यमध्वर्योरुत्तरतो दक्षिणाभिमुखः स्फ्यं गृहीत्वोर्ध्वज्ञुरुपविशेत् । एतेनार्थाद्धोतुरुपवेशनमुभयोर्मध्ये सिद्धं भवति ।

पत्नीसंयाजेषु प्रथमो यागः

सव्यहस्तेनाध्वर्यु: उपभृतं धृत्वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् 'सोमायानुब्रू३हि' इति होतार सम्प्रेष्य पुनः स्रुवेण वारत्रयमाज्यं जुह्वां गृहीत्वा चतुर्गृहीतं सम्पादयेत् । प्रेषितो होता • 'आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे३म्'[3]

---

1 तै० सं० १।१।१३।२

2 कं शकटं तद्यत्र स्तभ्यते सा कस्तम्भी ।

• 3 ऋ० सं० १।९१।१६ ; ९।३१।४

इति मन्द्रस्वरेण पुरोऽनुवाक्यां ब्रूयात् । तदनन्तरमाश्रावणप्रत्याश्रावणे कृते सत्यध्वर्युः 'सोमं यज' इति होतार सम्प्रेष्येत् । एवं प्रेषितो होता 'ये३ यजामहे, सोमं, [1]सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्वा३ वौ३षट्' इति मन्द्रेणोक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कार-मनुमन्त्रयेत । होत्रा वौषडित्युक्तेऽध्वर्युर्गार्हपत्यस्योत्तरार्धे सोमं जुहुयात् । होमसमनन्तरमेव यजमानः 'सोमायेदं न मम' इति त्यागं कृत्वा 'सोमस्याहं देवयज्यया सुरेता रेतो धिषीय' इति हुत-मनुमन्त्रयेत ।

द्वितीयो यागः

पूर्ववत् 'त्वष्ट्रेऽनुब्रू३हि' इत्यध्वर्युः होतारं प्रेष्येत् । होता च 'इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलो३म्'[2] इति पुरोऽनुवाक्यां ब्रूयात् । तत आश्रावणप्रत्याश्रावणे कृतेऽध्वर्युणा 'त्वष्टारं यज' इति प्रेषितो होता 'ये३यजामहे त्वष्टारं [3]तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट्' इति याज्यामुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । वषट्कारान्तेऽ-ध्वर्युर्गार्हपत्यस्योत्तरार्धे सोमाहुतेर्दक्षिणत उत्तरतो वा त्वष्टारं जुहुयात् । अत्रापि यजमानः 'त्वष्ट्र इदं न मम' इति त्यागं कृत्वा 'त्वष्टुरहं देव-यज्यया पशूनां रूपं पुषेयम्' इति हुतमनुमन्त्रयेत ।

---

1 ऋ० सं० १।९१।१८

2 ऋ० सं० १।१३।१०

3 ऋ० सं० ३।४।९ ; ७।२।९

## तृतीयो यागः

ततोऽध्वर्युराहवनीयतो गार्हपत्ये परिश्रितेऽपरिश्रिते वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां कुर्वन् 'देवानां[1] पत्नीभ्योऽनुब्रू३हि' इति होतार सम्प्रेष्य पुनर्वारत्रयं स्रुवेणाज्यं जुह्वां गृहीत्वा चतुर्गृहीतं सम्पादयेत् । प्रेषितो होता 'देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतो३म्'[2] इति पुरोऽनुवाक्यामनूच्याश्रावणप्रत्याश्रावणानन्तरमध्वर्युणा 'देवानां पत्नीर्यज' इति प्रेषितो होता 'ये३यजामहे देवानां पत्नीरुत[3] ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३, वौ३षट्' इति मन्त्रेण याज्यामुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । होत्रा वौषडित्युक्तेऽध्वर्युः गार्हपत्यस्योत्तरार्धे देवपत्नी जुहुयात् । होमसमनन्तरमेव यजमानः 'देवानां पत्नीभ्य इद न मम' इति त्यागं कुर्यात् ।

---

1 पत्नीसंयाजाख्ये होमकर्मणि सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहूः, अग्निर्गृहपतिरिति क्रमेण देवता भवन्ति । तत्रापस्तम्बीयानामयमेव क्रमः सूत्रे तथा दर्शनात् । केचित् देवपत्नीयागात् पूर्वं राकादीना त्रयाणां यागमिच्छन्ति । अन्ये पुनः देवपत्नीयागानन्तरमेषामनुष्ठानमभिप्रयन्ति । आश्वलायनीयानां राकादयस्त्रयो यागाः काम्या भवन्ति । आपस्तम्बेन तु एतेषा नित्यतया काम्यतया चोभयथा विधानादापस्तम्बीयानां मते विकल्पः सिध्यति । तत्रापस्तम्बमते सर्वा देवता आज्येन यष्टव्याः । अथवा आज्येन सोमत्वष्टाराविष्ट्वा देवपत्नीरग्निर्गृहपतिरित्युभावपि जाघन्या यजेत । जाघनी च पशोः पुच्छम् । सा लौकिकापणादितो ग्राह्या न तदर्थं पशुविशसनमिति पूर्वमीमांसायां निर्णीतम् (पू० मी० ३।३।१०) ।

2 ऋ० स० ५।४६।७

3 ऋ० सं० ५।४६।८

चतुर्थो यागः

पूर्ववदध्वर्युः 'राकाया अनुब्रू३हि' इति होतारं सम्प्रेष्येत् । होता च 'राकामहं[1] सुहवा सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यो३म्' इति पुरोऽनुवाक्यामुक्त्वा पूर्ववदाश्रावणप्रत्याश्रावणप्रैषादिषु[2] कृतेषु 'ये३ यजामहे, राकां, यास्ते[3] राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपाऽऽगहि सहस्रपोषं सुभगे रराणा वौ३षट्' इति याज्यामभिधाय 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । होत्रा वौषडित्युक्तेऽध्वर्युर्गार्हपत्ये राकां जुहुयात् । अत्र यजमानः 'राकाया इदं न मम' इति त्यागं कृत्वा 'राकाया अहं देवयज्यया प्रजावान् भूयासम्' इत्यनुमन्त्रयेत । यजमान-पत्न्यपि 'राकाया अहं देवयज्यया प्रजावती भूयासम्' इत्यनुमन्त्रयेत ।

पञ्चमो यागः

ततोऽध्वर्युः पूर्ववत् 'सिनीवाल्या अनुब्रू३हि' इति होतारं सम्प्रेष्येत् । एवं प्रेषितो होता 'सिनीवालि [4]पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नो३म्' इति पुरोऽनुवाक्यां ब्रूयात् । तत आश्रावणप्रत्याश्रावणप्रैषादिषु[5] कृतेषु होता 'ये ३यजामहे, सिनीवालीं, या[6] सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्मै विश्पत्न्यै हविः सिनी-

---

1 ऋ० स० २।३२।४

2 'राकां यज' इति याज्याप्रषः ।

3 ऋ० सं० २।३२।५

4 ऋ० सं० २।३२।६

5 'सिनीवालीं यज' इति याज्याप्रैषः ।

6 ऋ० सं० २।३२।७

वाल्यै जुहोतना३ वौ३षट्' इति याज्यामुक्त्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत। होत्रा वौषडित्युक्तेऽध्वर्युर्गार्हपत्ये सिनीवालीं जुहुयात्। होमसमनन्तरमेव यजमानः 'सिनीवाल्या इदं न मम' इति त्यागं कृत्वा 'सिनीवाल्या अहं देवयज्यया पशुमान् भूयासम्' इत्यनुमन्त्रयेत। पत्नी 'सिनीवाल्या अहं देवयज्यया पशुमती भूयासम्' इत्यनुमन्त्रयेत।

## षष्ठो यागः

तदनन्तरमध्वर्युः पूर्ववत् 'कुह्वा अनुब्रू३हि' इति होतारं प्रेष्येत्। प्रेषितो होता 'कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेमो३म्' इति पुरोऽनुवाक्यां ब्रूयात्। ततः पूर्ववदाश्रावणप्रत्याश्रावणप्रैषादिषु[1] कृतेषु होता 'ये३यजामहे कुहूं, कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु। स दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातु३ वौ३षट्' इति याज्यामभिधाय 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत। होत्रा वौषडित्युक्तेऽध्वर्युर्गार्हपत्ये कुहूं जुहुयात्। होमानन्तरं यजमानः 'कुह्वा इदं न मम' इति त्यागं कृत्वा 'कुह्वा अहं देवयज्यया पुष्टिमान् पशुमान् भूयासम्' इति हुतमनुमन्त्रयेत। यजमानपत्न्यपि 'कुह्वा अहं देवयज्यया' पुष्टिमती पशुमती भूयासम्' इत्यनुमन्त्रयेत।

## सप्तमो यागः

ततोऽध्वर्युः पूर्ववत् 'अग्नये गृहपतयेऽनुब्रू३हि' इति होतारं प्रेष्येत्।

---

1 'कुहूं यज' इति याज्याप्रैषः।

[1]प्रेषितो होता '[2]अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावो३म्' इति पुरोऽनुवाक्यां पठेत् । तदनन्तरं पूर्ववदाश्रावणप्रत्याश्रावणे कृतेऽध्वर्युः 'अग्निं गृहपतिं यज' इति होतारं प्रेष्येत् होता 'ये३यजामहेऽग्निं गृहपतिं [3]हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे । सुगार्हपत्याः समिषो दीदिह्यस्मद्र्य१क् सं मिमीहि श्रवांसी३ं वौ३षट्' इति याज्यां पठित्वा 'वागोजः सह ओजो मयि प्राणापानौ' इत्युपांशु वषट्कारमनुमन्त्रयेत । वषट्कारानन्तरमध्वर्युः गार्हपत्ये सोमत्वष्ट्राहुत्योर्मध्येऽग्निं गृहपतिं जुहुयात् । 'अग्नये गृहपतय इदं न मम' इति यजमानः त्यागं कृत्वा 'देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम्' इति हुतमनुमन्त्रयेत ।

## लेपसंस्कारः आज्येडा च

ततोऽध्वर्युः स्रुवेणाज्यमादाय होतुः प्रदेशिन्या उत्तममध्यमे पर्वणी अञ्ज्यात् । होता च 'वाचस्पतिना ते हुतस्येशे प्राणाय प्राश्नामि' इत्युत्तरपर्वलेपमुत्तर ओष्ठे आत्माभिमुखं पाणितलं कृत्वा निमृज्य 'मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामि' इत्यधरपर्वलेपमधर ओष्ठे निमृज्याप उपस्पृश्याऽऽज्यं पाणितलेऽवदापयीत । ततोऽध्वर्युरुपस्पृष्टोदकस्य होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्येत्, आग्नीध्रस्य हस्ते षडाज्यबिन्दू-

---

1 पत्नीसंयाजेषु सोमः, त्वष्टा, देवानां पत्नीः, अग्निर्गृहपतिरिति चतस्रो देवता नित्याः । राका सिनीवाली कुहूरिति तिस्रः काम्याः । तत्र काम्यपक्षे अग्नेर्गृहपतेः पूर्वं काम्या यष्टव्याः । काम्ययागेष्वत्र पत्न्या अप्यनुमन्त्रणमन्त्रो भवतीति विशेषः ।

2 ऋ० सं० ६।१५।१३

3 ऋ० सं० ५।४।२

निडामवद्येत् । अध्वर्युराग्नीध्रः पत्नी चोपहूयमानामाज्येडामन्वारभेरन् । ततो होता पूर्ववदिडामुपहूय मन्द्रस्वरेणाज्येडामुपह्वयीत । यजमानश्च 'इडाऽस्माननुवस्तान् घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवी' इत्याज्येडामनुमन्त्रयेत । होता आग्नीध्रश्च स्वस्वहस्तस्थामाज्येडां तूष्णीं प्राश्याऽऽचामेताम् ।

## सम्पत्नीयहोमः

अस्मिन्नेव काले स्रुवेणाज्यं गृहीत्वा [1]पत्न्यामन्वारब्धायामध्वर्युः 'सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्याविभूताम् । सं जानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेतां स्वाहा' इति गार्हपत्ये जुहुयात् । ततो यजमानः 'दिवि ज्योतिषेऽजराय परमात्मन इदं न मम' इति त्यागं कृत्वा [2]'वेदोऽसि वित्तिरसि' इत्यन्तर्वेदि वेदं निधायाभिमृशेत् । तदनु होताऽध्वर्युर्वा वेदं पत्न्यै प्रदाय 'वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वा' इति पत्नीं वाचयेत् । यदि पत्नी प्रजाकामा भवेत्तदा वेदस्य ज्ञानुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत । एवंविधकामनाभावेऽपि वाचनं भवत्येव ।

---

1 पत्न्यामन्वारब्धायामपि सम्पत्नीयहोमो न निवर्त्ततेऽपि तु पत्न्यामनालम्भुकत्वादिना असन्निहितायामपि होमो भवत्येव । न च पत्नीसंयाजाङ्गं सम्पत्नीयहोमः । अतः पत्न्यभावेऽपि भवतीति भावः ।

2 'वेदोऽसि वित्तिरसि पाप्मनो व्यावृत्तिं विदेय कर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनम्' (तै० सं० १।६।४।४) इति समग्रो मन्त्रः ।

## योक्त्रविमोचनम्

ततो होता 'प्र त्वा मुञ्चामि वरुणस्य पाशात्'[1] इति पत्न्या योक्त्रं विमुच्य तद्योक्त्रं द्विगुणं कृत्वा गार्हपत्यस्य पश्चात् प्राक्पाशं निधाय तस्योपरिष्टाद्वेदं विस्रस्य उदगग्रं निधाय वेदतृणैः संश्लिष्टं पूर्णपात्रं[2] पुरो निधायाभिमृशन् पूर्णपात्रमभिमृशन्तीं पत्नीं 'पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः' इति वाचयित्वा 'प्राच्यां दिशि मासाः पितरो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा' इति तस्मात् पूर्णपात्रादुदकं गृहीत्वा प्रतिदिशमुदुक्षन् स्वयमुदुक्षन्तीं पत्नीं वाचयित्वा योक्त्रस्याधस्तात् पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं हस्तमुत्तानं निधाय पूर्णपात्रं निनयन् 'माऽहं प्रजां परासिचं या नः सयावरीः स्थ न । समुद्रे वो निनयानि स्वं पाथो अपीथ' इति पत्नीं वाचयेत् ।

## पिष्टलेपफलीकरणहोमौ

अथाध्वर्युः दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय[3] चतुर्गृहीत आज्ये [4]फलीकरणानोप्य 'अग्नेऽदब्धायोऽशीततनो पाहि' इति मन्त्रेण दक्षिणाग्नौ जुहुयात् । अयमेव फलीकरणहोम इत्युच्यते । होमसमनन्तरमेव यजमानः 'अग्नयेऽदब्धायवेऽशीततनव इदं न मम' इति त्यागं कृत्वा 'या सरस्वती

---

1 ऋ० सं० १०।८५।२४

2 पात्रपूर्णमुदकं पूर्णपात्रमिति रुद्रदत्तः ।

3 इध्मे शास्त्रोक्तप्रमाणेन छिन्ने सति तच्छेषकाष्ठानीध्मप्रव्रश्चनानि । तानि दक्षिणाग्नौ प्रक्षिप्य तेषामुपरि जुहूगताज्ये स्थापितान् फलीकरणाञ्जुहुयात् ।

4 तण्डुलेषु गृहे क्रियमाणेषु अपनेया मालिन्यांशाः फलीकरणाः ।

विशो भगीना तस्यां मे रास्व तस्यास्ते भक्षिवाणो भूयास्म' इति फलीकरणहोमे हुते मुखं विमृश्याप उपस्पृशेत् । तदनन्तरमध्वर्युश्चतुर्गृहीत आज्ये [1]पिष्टलेपानोप्य 'उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले । अव प्रुषो विप्रुषः संजयामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा' इति जुहुयात् । यजमानश्च 'विश्वेभ्यो देवेभ्य इदं न मम' इति त्यजेत् ।

## दाक्षिणाग्निकहोमाः

ततोऽध्वर्युः जुह्वां त्रिकृत्व आज्यं गृहीत्वा 'या सरस्वती विशो भगीना तस्यै स्वाहा' 'या सरस्वती वेशभगीना तस्यै स्वाहा' 'इन्द्रोऽपानस्य केहमनसो वेशान् कुरु सुमनसः सजातान् स्वाहा' इति तिस्र आज्याहुतीः पृथक् पृथगाज्यग्रहणपूर्वकं दक्षिणाग्नौ जुहुयात् । यजमानस्तां तां देवतामुद्दिश्य त्यजेत् ।

## पूर्णपात्रजलाञ्जनम्

तदनन्तरमध्वर्युः पत्न्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयेत् । पत्नी च 'समायुषा सं प्रजया'[2] इत्यानीयमाने पूर्णपात्रे जपित्वा तदुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन मुखं विमृज्य 'पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासम्' इत्युत्तिष्ठेत् ।

---

1 पिष्टानां संयवनकाले पात्रे योंऽशो लिप्तः स पिष्टलेपः ।

2 'समायुषा सं प्रजया समग्ने वर्चसा पुनः । स पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम' (तै० सं० १।१।१०।२) इति समग्रो मन्त्रः ।

## होतृकर्तृकसर्वप्रायश्चित्तहोमाः

तदनु होता वेदतृणानि दक्षिणेन हस्तेनाग्रप्रदेशे गृहीत्वाऽविधुन्वन् 'तन्तुं तन्वन्रजसो भानुमन्विहि'[1] इति गार्हपत्यादारभ्य सव्येन हस्तेन सन्ततं स्तृणन्नाहवनीयं गत्वा शेषं निधाय प्रत्यगुदगाहवनीयादवस्थायाऽऽज्यस्थाल्या स्रुवेणाज्यमादाय सर्वप्रायश्चित्तानि जुहुयात् । 'अयाश्चाग्नेऽनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतोऽयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा' इति मन्त्रेणाहवनीये जुहुयात् । अत्राग्निरयसौ देवते । एवम् 'अतो देवा अवन्तु नः'[2] इति द्वाभ्यां मन्त्राभ्यामाहवनीये जुहुयात् । अत्र क्रमेण देवा विष्णुश्च देवताः । ततो व्याहृतीभिर्व्यस्तसमस्ताभिराहवनीये जुहुयात् । मिलित्वा सप्ताहुतयो भवन्ति । अत्र व्याहृतीनां व्यस्तसमस्तानां क्रमेणाग्निवायुसूर्यप्रजापतयो देवताः । अत्र सर्वत्रापि यजमानस्तत्तद्देवताभ्यो मनसा तत्तद्द्रव्यस्य त्यागं कुर्यात् ।

## संस्थाजपः

ततो होता यथास्थित एव 'ओं च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः' इति संस्थाजपेनोपस्थाय [3]तीर्थेन निष्क्रामेत् । एतदन्तं दर्शपूर्णमासयोर्होतृकर्म ।

## अध्वर्युकर्तृकप्रायश्चित्तहोमाः

अध्वर्युरपि आहवनीयसमीपं गत्वा आज्यस्थाल्या आज्यं जुह्वा स्रुवेण वा गृहीत्वा आहवनीये दर्शपूर्णमासयोरविज्ञातदोषनिर्घातार्थानि सर्वप्रायश्चित्तानि जुहुयात् । इमा द्विचत्वारिंशदाहुतयो दर्शपूर्णमासयोः सर्वप्रायश्चित्तत्वेन सूत्रकारेण सूत्रिताः ।

---

1 ऋ० सं० १०।५३।६

2 ऋ० सं० १।२२।१६–१७

3 See आ० श्रौ० १।११।७

## ब्रह्मकर्तृकप्रायश्चित्तहोमाः

अत्राश्वलायनेन मन्त्रयोः कर्मणो वा विपर्यासेऽन्तरिते मन्त्रे कर्मणि वा ब्रह्मकर्तृकः प्रायश्चित्तहोमः समुपदिष्टः । स ब्रह्मा[1] गार्हपत्यस्य पश्चादुपविश्य दक्षिणं जान्वाच्य स्रुवेणाज्यस्थाल्या आज्यमादाय 'भूः स्वाहा' इति गार्हपत्ये जुहुयात् । ऋक्ते यज्ञभ्रेषे इदमेव प्रायश्चित्तं तदभिमतम् । एवं यजुष्टे यज्ञभ्रेषे दक्षिणाग्नेः पश्चादुपविश्य पूर्ववत् स्रुवेणाज्यस्थाल्या आज्यमादाय 'भुवः स्वाहा' इति दक्षिणाग्नौ जुहुयात् । सामतः आहवनीयस्य पश्चादुपविश्य पूर्ववत् 'स्वः स्वाहा' इत्याहवनीये जुहुयात् । सर्वेभ्यो वेदेभ्यो युगपद् भ्रेषे स्मार्त्तानां शौचाचमनादीनां च भ्रेषे आहवनीयस्य पश्चादुपविश्य पूर्ववदाज्यस्थाल्या आज्यं स्रुवेणादाय 'भूर्भुवः स्वः स्वाहा' इत्याहवनीये जुहुयात् ।

## समिष्टयजुर्होमः

ततोऽध्वर्युस्तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा 'आप्यायताम्' इत्यादि पूर्ववत् ध्रुवामाप्याय्य, अन्तर्वेदिगतं सर्वं बर्हिर्गृहीत्वाऽन्तर्वेद्यूर्ध्वस्तिष्ठन् बर्हिर्ध्रुवाया अधस्तात् कृत्वा 'देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा' इति बर्हिरनुप्रहृत्य 'वाते धाः स्वाहा' इति ध्रुवया समिष्टयजुर्जुहुयात् । ततो यजमानः 'देवेभ्यो गातुविद्भ्यो ब्रह्मण इदं न मम' इति त्यागं कुर्यात् । प्रवासं कुर्वति यजमानेऽध्वर्युर्यजमानभागं 'प्रजापतेर्विभान्नाम लोकः'[2] इति ध्रुवायामवधाय 'देवा गातुविद' इति पूर्ववज्जुहुयात् । यजमानोऽपि 'वसुर्यज्ञो वसुमान् यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छतु

---

1 आपस्तम्बीययजमानगृहेऽध्वर्युरेव जुहुयात्, न ब्रह्मा। तदा 'भूर्भुवः स्वः स्वाहा' इति स्थाने 'भूर्भुवः सुवः स्वाहा' इति पठनीयः ।

2 'प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेन' इति समग्रो मन्त्रः। (तै० सं० १।६।५।१)

यज्ञेश्वरप्रसादो[1] म आगच्छतु' इति समिष्टयजुर्हुतमनुमन्त्र्य 'सं यज्ञपति-राशिषा' इति स्वभागं प्राश्याचम्य 'दधिक्राव्णो अकारिषम्'[2] इति सायंदोहं[3] प्राश्याचम्य 'इदं हविरि'ति प्रातर्दोहं प्राश्याचामेत्। अत्र क्षत्रियवैश्यौ सान्नाय्येडायजमानभागौ न प्राश्नीयाताम्।

## प्रणीताविमोकः

ततोऽध्वर्युः 'अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिंसीरमुया शयाना। होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्ने' इति होतृषदनैर्वेदिमभिस्तीर्य 'को वोऽयोक्षीत् स वो विमुञ्चतु' इत्यन्तर्वेदि प्रणीता आसाद्य तासु सन्ततामुदकधारां स्रावयेत्। अत्र यजमानः 'सदसि सन्मे भूयाः'[4] इति प्रणीतासूदकधारायामानीयमानायां 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्। दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपति-र्मार्जयन्ताम्'[5] इति तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपः सिक्त्वा 'समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत् पयः' इत्यन्तर्वेदि प्रणीताशेषं निनीय 'यदप्सु ते

---

1 'यत् कामयते तस्य नाम गृह्णाति' (आप० श्रौ० ४।१३।८) इति वचनाददः-शब्दस्थाने यज्ञेश्वरप्रसादो गृह्यते।

2 'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्' इति समग्रो मन्त्रः।

3 पौर्णमास्यां तथाऽमावास्यायामसोमयाजिनोऽपि सायदोहप्रातर्दोहप्राशनं नास्ति, सान्नाय्याभावात्।

4 'सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः' इति समग्रो मन्त्रः (तै० सं० १।६।५।१)

5 तै० सं० १।६।५।१–२

सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति । या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठ-भाजो भूयास्म' इति मुखं प्रमृशेत् ।

## उपवेषनिरसनम्

अथाध्वर्युः 'यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तान-स्मभ्यमिहा कुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान् कुरु' इत्युपवेषमुत्करे पुरस्तात्प्रत्यञ्चमुपगूह्य 'निरमुं नुद' इति पञ्चभिर्मन्त्रैः उपवेषं निरस्येत् । 'अवसृष्टः परापत'[1] इति मन्त्रेण वा निरसनं कृत्वा 'यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्'[2] इति गणरूपेण प्रथितानां कपालानां समूहनं कृत्वा संख्यायोद्वासयेत् । एतावदाध्वर्यवं कर्म समाप्तम् । इममेव मन्त्रमध्वर्युणा सह यजमानो जपेत् ।

## सर्वान्ते याजमानं कर्म

एवं यज्ञं परिसमाप्यापस्तम्बाचार्यो ब्रह्मकर्तृकजपं विधाय याजमानं कर्म समुपदिष्टवान् । यजमानसम्बन्धीनि कर्माणि तत्र तत्र निर्दिष्टानि पूर्वमेव । सर्वान्ते विष्णुक्रमणादिकं यजमानेन कर्तव्यम् । [3]विष्णुक्रम-

---

1 'अवसृष्टः परापत शरो ब्रह्म संशितः । गच्छामित्रान् प्रविश मैषां कञ्चनोच्छिषः' इति समग्रो मन्त्रः ।

2 तै० सं० १।१।७।२

3 'विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व निर्भक्तः स यं द्विष्मः । विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व निर्भक्तः स यं द्विष्मः । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व निर्भक्तः स यं द्विष्मः । विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व निर्भक्तः स यं द्विष्मः' (तै० सं० १।६।५।२) इति चत्वारो विष्णुक्रममन्त्राः ।

मन्त्राश्चत्वारः, [1]विष्णवतिक्रममन्त्रास्त्रयः, [2]अतिमोक्षमन्त्राश्च त्रयः। एतेषां मन्त्राणां व्यतिषङ्गपक्षमेके स्वीकुर्वन्ति, एके च विनिरूढपक्षम्। व्यतिषङ्गो नाम मन्त्राणां परस्परं मेलनम्। विनिरूढो नाम यथाक्रमं मन्त्राणां पठनम्। परस्परं मेलनञ्च-तत्तत्समुदायस्य प्रथमं मन्त्रं पठित्वा द्वितीयमन्त्रं तत्तत्समुदायस्य पठेत्। एवं परस्परमेलनेन मन्त्रान् यजमानो वेदिमध्येऽवस्थाय पठेत्। अनन्तरं यज्ञविमोकजपं, व्रत-विसर्जनजपं, पुनरालम्भजप, गोमतीजपञ्च कृत्वा 'वृष्टिरसि' इति मन्त्रं जपित्वोपस्पर्शन कुर्यात्।

---

1 'अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि। इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि। विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वय द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि' (तै० सं० ३।५।३।१-२) इत्रि त्रयो विष्णवतिक्रममन्त्राः।

2 'ये देवा यज्ञहनः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषः+वयम्। आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाक गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः। ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषः+वयम्। यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। ग्रहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजांसि। ये देवा यज्ञहनो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। ये देवा यज्ञमुषः+वयम्। येनेन्द्राय समभरः पयांस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेम सजातानां श्रैष्ठ्य आ धेह्येनम्' (तै० सं० ३।५।४।१-२) इति त्रयोऽतिमोक्षमन्त्राः।

आपस्तम्बाचार्यः—आध्वर्यवं ब्राह्मं याजमानञ्च पृथक् पृथक् कीर्तितवान्, किन्तु प्रयोगज्ञानसौकर्याय यत्र यस्य यथाऽऽवश्यकता तत्र तस्य तथाऽत्र मया सन्निवेशः कृतः। दर्शपूर्णमासप्रयोगं परिसमाप्यापस्तम्बाचार्यः—दर्शपूर्णमासयोः काम्यप्रयोगान्, पौर्णमासीसमानतन्त्रतया वैमृधेष्टिम्,[1] आभिचारिकेष्टिम्,[2] अन्यांश्चानुनिर्वाप्ययागान्, साकंप्रस्थायीयं, दाक्षायणयज्ञञ्च प्रदर्शितवान्। अत्र सर्वत्रापि दार्शपौर्णमासिकाङ्गान्येवानुष्ठेयानि भवन्ति।

---

## पिण्डपितृयज्ञप्रकरणम्

अमावास्याया अपराह्णे श्रौतसूत्रकारैः पिण्डपितृयज्ञः कर्त्तव्यतया समुपदिष्टः। तत्र यज्ञानुष्ठानकाल आश्वलायनेनैवमुक्तः—'अमावास्यायामपराह्णे पिण्डपितृयज्ञः'[1] इति। अस्यायमर्थः—अमावास्याशब्दः प्रतिपत्पञ्चदश्योः सन्धिवचनोऽप्यत्रापराह्णशब्दसम्बन्धात्तद्वत्यहोरात्रे वर्त्तते। तस्मादहोरात्रस्यापराह्ण एव पिण्डपितृयज्ञः समनुष्ठेय इति सिध्यति। यदा पुनरहोरात्रसन्धौ तिथिसन्धिः स्यात्तदा औपवसथ्य एवाहनि कुर्वीत। आपस्तम्बाचार्येणापि[2] पिण्डपितृयज्ञानुष्ठानकालविषये आश्वलायनमतमेव उररीकृतम्। अमावास्यायां तिथौ यस्मिन्नहनि चन्द्रमा दृष्टिपथं नावतरति· तदहरेवापराह्णे पिण्डपितृयज्ञः कर्त्तव्य इति तस्याशयः। यदि स्वतन्त्रोऽयं यागस्तर्हि किमर्थमस्य दर्शपूर्णमासप्रयोगमध्ये

---

1. इन्द्रो देवता, एकादशकपालः पुरोडाशो द्रव्यम्।

2. अग्नीषोमीयमेकादशकपालम्, आदित्यं चरुम्, सारस्वतं चरुं पूर्णिमायाम्, पौष्णं चरुम् ऐन्द्रमेकादशकपालममावास्यायाञ्च कर्तव्यं कर्म।

3. आ० श्रौ० २।६।१

4. आप० श्रौ० १।७।१

कथनं सम्भवेदिति प्रश्नस्योत्तरं वृत्तिकारेण एवमुपन्यस्तम्—औपवसथ्येऽहनि सन्धौ वद्धक्रमेषु दर्शपूर्णमासपदार्थेषु स्थाननियमार्थमेवास्य दर्शपूर्णमासान्तर्गतत्वं द्रष्टव्यम् ।

पिण्डैः साध्यः पितृयज्ञः पिण्डपितृयज्ञ इति तन्निर्वचनं भाष्यकारेण प्रदर्शितम् । पिण्डयुक्तः पितृयज्ञ इति वा विग्रहः । •अत्र होमानन्तरं पितॄनुद्दिश्य पिण्डदानविधानात् तत्त्वम् । इदं निर्वचनं होमतुल्यत्वनिर्देशेन पिण्डप्रधानगुणकमेव भवति ।

अस्य यज्ञस्य स्वरूपविषये याज्ञिकानां मीमांसकानाञ्च मतवैषम्यं वर्त्तते । तत्रायं विचारः—'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति विधिरस्ति । तत्रायं यागः किममावास्याशब्दवाच्यदर्शयागाङ्गमुत[1] अमावास्यायामनुष्ठेयं स्वतन्त्रं कर्मेति संशयः । अमावास्याशब्दोऽयं यागवाचक इति कृत्वा पिण्डपितृयज्ञस्य दर्शयागाङ्गत्वेनोक्तत्वात् फलकल्पनालाघवात् दर्शाङ्गमिदं कर्मेति पूर्वपक्षिण आशयः । कात्यायनोऽपि[2] यागोऽयं दर्शाङ्गमित्युक्तवान् । अन्येऽपि सूत्रकाराः पूर्वपक्षिमतमङ्गीकृत्य दर्शाङ्गत्वमस्य अभिप्रयन्ति । तत्र सिद्धान्तिन इदमभिसंहितम्—'पितृयज्ञः स्वकालत्वादनङ्गं स्यादिति[3] । अस्यायमर्थः—

---

1. पिण्डपितृयज्ञस्य दर्शाङ्गत्वे स्वीक्रियमाणे किमिदं कर्म सन्निपत्योपकारकमुत आरादुपकारकमिति विवेचनीयमापतति । यदि दर्शयागीयं द्रव्यं देवता वोद्दिश्य कर्मेदं विहितं स्यात्तदा सन्निपत्योपकारकं भवितुमर्हति । किन्तु पिण्डपितृयज्ञस्योत्पत्तिवाक्ये दर्शयागीयद्रव्यस्य देवताया वा समुल्लेखो न दृश्यते । केवलममावास्यायामिति कालस्य उल्लेखः । अतस्तत्कालानुष्ठेयं कर्मेत्यङ्गीकृत्य आरादुपकारकत्वमस्य वक्तव्यम् । तदपि दर्शप्रयोगान्तर्गतमिदं कर्म भवितुं नार्हति । यतश्च 'पूर्वाह्णो वै देवानामपराह्णः पितृणाम्' इति विधिबलात् पूर्वाह्णः कालो दर्शयागस्य, अपराह्णश्च कालः पिण्डपितृयज्ञस्य इति प्रतीयते । अतोऽस्यारादुपकारकत्वं सिध्यति ।

2. का० श्रौ० ४।१।२८–३०

3. जै० सू० ४।४।८

यागोऽयं न कस्याप्यङ्गं किन्तु स्वतन्त्रं फलवत् कर्मेति । अत्र दर्शशब्दो न यागवाचकः किन्तु तिथिवाचक एव । तिथावेवास्य शक्तिः मुख्या, गौण्या त्वयं दर्शयागवाचकः । अतो 'मुख्यसम्भवे गौणी नाश्रीयते' इति न्यायेन दर्शशब्दोऽयं तिथिवाचक एव पर्यवस्येत् । अपि च, अनुवादे एव लक्षणा स्वीकार्य्या न तु विधाविति । इदन्तु अत्र विधिवाक्यम् । अतोऽत्र लक्षणाश्रयणं न न्याय्यम् । 'अमावास्यायामपराह्णे' इत्यत्र कालवाचिना सप्तम्यन्तेनापराह्णशब्देनास्य सामानाधिकरण्यसद्भावादपि दर्शशब्दोऽयं तिथिविशेषवाचक एव बोध्यः । यागस्य स्वातन्त्र्ये हेत्वन्तरमुक्तम्—'तुल्यवच्च प्रसंख्यानात्' इति । 'चत्वारो वै महायज्ञा अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमः पिण्डपितृयज्ञः' इति श्रुतिवचनेन अग्निहोत्रादीनां चतुर्णां महायज्ञतया व्यपदेशो विहितः । तत्र पिण्डपितृयज्ञस्यापि एकस्मिन्नेव वाक्ये तुल्यरूपेण महायज्ञत्वमेव विहितं दृश्यते । यदि यागोऽयं कस्याप्यङ्गं स्यात्तर्हि प्राधान्याभावादस्याविशेषेण महायज्ञत्वव्यपदेशो नोपपद्येत । अतो नेदमङ्गकर्मेति । 'प्रतिषिद्धे च दर्शनात्' इति सूत्रेण पुनरपि हेत्वन्तरमुक्तम् । तदिदं व्यतिरेकव्यभिचारं दर्शयित्वा पिण्डपितृयज्ञस्य स्वातन्त्र्यं समर्थयति । यत्र दर्शयागो निषिद्धस्तत्रापि पितृयज्ञः कर्त्तव्यतया समुपदिष्टो वर्त्तते । अङ्गिनः प्रतिषेधे नाङ्गमनुष्ठातुं शक्यते । प्रत्युत दर्शयागे प्रतिषिद्धेऽपि पिण्डपितृयज्ञः कर्त्तव्यत्वेनोपदिष्टः । तेन नायं दर्शाङ्गं किन्तु स्वतन्त्रं कर्मेति सिद्धान्तः । 'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः'[1] इति मनुस्मृतौ तृतीयान्तो दर्शशब्दः कर्मवाचित्वेन प्रसिद्धः । अतो मनुवचनादमावास्याशब्दोऽपि कर्मवाचीति प्रतीयते । तत्रापि स्मृतिवाक्ये श्राद्धपदेन मासिश्राद्धमुच्यते । तच्च कृष्णपक्षे क्रियमाणं भवति । अमावास्याकालं विना न तत् कर्त्तुं शक्यते इति वाक्यमिदं बोधयति । अतः स्वतन्त्रफलार्थमेवेदं कर्म करणीयमिति मनुवचनादापतति ।

---

1. म० सं० ३।२८२

सिद्धान्तमिममङ्गीकृत्य मीमांसका वदन्ति—न दर्शाङ्गमिदं किन्तु स्वतन्त्रमिदममावास्याकालेऽनुष्ठेयं कर्मेति । अत एव विश्वजिन्न्यायेन[1] स्वर्ग एव पितृयज्ञस्य फलत्वेन कल्पनीय इति तेषामाशयः । तेषां मते त्वस्यानारम्भे न कोऽपि दोषः समुत्पद्यते । आरब्धस्य यज्ञस्य विच्छेदे एव प्रायश्चित्तं कर्त्तव्यम् ।

अत्र याज्ञिकमतापेक्षया मीमांसकमतमेव श्रेय इति प्रतिभाति । अनङ्गत्वमेव तु युक्तम् । खण्डदेवाचार्योऽपि भाट्टदीपिकायां[2] वस्तुतस्त्वित्यादिना पिण्डपितृयज्ञस्याकरणे नित्यकर्मवत् प्रत्यवायजनकत्वेन पिण्डपितृयज्ञो दर्शपूर्णमासादिरिव नित्य इति बोधयति । अतः फलमनङ्गत्वेऽपि न कल्पनीयमित्युक्तवान् । अस्य चाकरणे प्रायश्चित्तमापस्तम्बादिभिराचार्यैरुक्तम् । अतो मीमांसकमतमनुसृत्य यागोऽयममावास्यायामपराह्णेऽनुष्ठेयं स्वतन्त्रं कर्मेति ग्रहीतुं शक्यम् ।

अनन्तरं यज्ञस्यानुष्ठानप्रकार इत्थमुच्यते—संकल्पानन्तरं तूष्णीं समूलं बर्हिराहृत्य 'अपां मेध्यं यज्ञियम्' इति मन्त्रेण परिस्तरणार्थान् कुशान् सकृदाच्छिद्य दक्षिणाप्रागग्रैर्दर्भैर्दक्षिणाग्निं परिस्तीर्य तद्दक्षिणतः पश्चाद्वा दर्भानास्तीर्य तदुपरि पिण्डपितृयज्ञोपयिकानि पात्राणि आसादयेत् । तानि च पात्राणि चरुस्थाली, आज्यस्थाली, शूर्पम्, स्फ्यः, उलूखलमुसले, स्रुवः, ध्रुवा, कृष्णाजिनम्, सकृदाच्छिन्नं बर्हिः, मेक्षणम्, कमण्डलू इति । पात्राणामासादनानन्तरं तेषां प्रोक्षणं कर्त्तव्यम् । ततो दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थाप्य अध्वर्युरुपवीती भूत्वा एकपवित्रेण चरुस्थालीमन्तर्धाय तया दक्षिणत उत्तरतो वा शकटादधि 'पितृभ्यो वो जुष्टं निर्वपामि' इति मन्त्रेण तूष्णीं वा पितृभ्यो व्रीहीन् निर्वपेत् । निर्वापावसरे शकटाद्बहिः पतितान् व्रीहीन् कस्मिंश्चित् पात्रे निदध्यादित्याश्वलायनो

---

1. जै० सू० ४।३।७
2. भा० दी० ४।४।८

मन्यते । ततो दक्षिणाग्नेः पश्चिमतः कृष्णाजिनमास्तीर्य तदुपर्युलूखलं प्रतिष्ठाप्य निरुप्तान् व्रीहीन् तत्रावपेत् । इदमावपनमाश्वलायनेन न कीर्त्तितम् । ततो यजमानपत्नी तानवहृत्य सकृत् फलीकृत्य सकृत् प्रक्षाल्य दक्षिणाग्नौ पचेत् । भक्तेषु यथा तण्डुलांशः किञ्चिदिवावशिष्टो भवेत्तथा पाकः कर्त्तव्यः । तदनन्तरम् 'अपहृता असुरा रक्षांसि वेदिषदः' इति मन्त्रमुच्चार्य दक्षिणाग्न्यतिप्रणीतयोर्मध्ये काञ्चन लेखामुल्लिखेत् । तां लेखां जलेन परिषिच्य सकृदाच्छिन्नैः कुशैरास्तीर्य आज्यं सर्पिश्च गृहीत्वा ध्रुवायां कृत्वा दक्षिणाग्नेर्दक्षिणतो निधाय तेनाज्येन स्थालीपाकमभिघार्य दक्षिणाग्नेः पश्चादासादयेत् । यदि नवनीतमाज्यकार्यार्थमुपयुज्यते तदाऽस्य विलापनमात्रं कृत्वा अन्यस्मिन् पात्रे आनीय पवित्राभ्यां तूष्णीमुत्पूय ततो ध्रुवायां कृत्वा दक्षिणाग्नेर्दक्षिणतो निधाय तेनाभिघार्य पूर्ववदासादयेत् । तत आञ्जनादीनि[1] द्रव्याणि दक्षिणाग्नेर्दक्षिणतो निदध्यात् । तदनु अध्वर्युः मेक्षणेन हविरवदायाभिघार्य सशेषं दक्षिणाग्नौ जुहुयात् । अत्र सोमः पितृमान् पितृपीतो वा देवता । तं शेषं पात्रान्तरे स्थापयित्वा पूर्ववत् पुनर्मेक्षणेनावदाय दक्षिणाग्नावेव सशेषं जुहुयात् । अत्र यमोऽङ्गिरस्वान् पितृमान् देवता । ततः शेषद्वयमेकीकृत्य मेक्षणेऽवदाय जुहुयात् । तदिदं स्विष्टकृत्स्थानीयं भवति । अत्र अग्निः कव्यवाहनो देवता । अत्रेदमभिसंहितम्—होममन्त्रे सर्वत्र 'स्वधा नमः' इति शब्दो वर्त्तते । अत्राश्वलायनाचार्येण कश्चन विकल्पः प्रदर्शितः । तत्र स्वधानमःशब्दस्य स्थाने स्वाहाशब्दं वा कृत्वा होमं कर्त्तुं शक्नुयात् । अस्मिन् पक्षे मन्त्रविपर्ययो व्यत्यासो यज्ञोपवीतित्वं च प्राप्नोति । तेनेदं निष्पन्नम्—यज्ञोपवीती भूत्वा 'अग्नये कव्यवाहनाय स्वाहा' 'सोमाय पितृमते स्वाहा' इति मन्त्रमुच्चार्य जुहुयादिति । इदमत्रावधेयम्-पिण्ड-

1. कशिपुः तूलपूरिता शय्या। उपबर्हणम् उपधानम्। आञ्जनं कज्जलम्। अभ्यञ्जनं शरीरोद्वर्त्तनार्थतैलादि।

पितृयज्ञस्य पित्र्यत्वात् 'प्राचीनावीती पित्र्येषु'[1] इति वचनादविशेषेण सर्वत्र प्राचीनावीतित्वमेव भवति। यत्र पुनः 'अध्वर्युरुपवीती' इति विशिष्य वचनं विहितं तत्र केवलमुपवीतित्वं बोध्यम्। एतदन्तमाध्वर्यवं कर्म प्रतिपादितम्।

इतः परं याजमानं कर्म प्रतिपाद्यते। अथ यजमानः प्राचीनावीती भूत्वा दक्षिणाग्नेरेकमुल्मुकं धूमविशिष्टं सव्यहस्ते गृहीत्वा आग्नेयकोणे सकृत् स्फ्येनोल्लिख्य 'उदीरतामवर' इति तामद्भिरवोक्ष्य उल्लिखितान्तस्थले तमुल्मुकं निक्षिप्य उल्लेखस्थाने पितृपितामहप्रपितामहेभ्यस्त्रीनुदकाञ्जलीन् दद्यात्। ततोऽवाचीनपाणिस्तेभ्यस्त्रीन् पिण्डान् दद्यात्। 'एतत्ते पितासौ ये च त्वामनु, एतत्ते पितामहासौ ये च त्वामनु, एतत्ते प्रपितामहासौ ये च त्वामनु' इत्येतैः प्रतिमन्त्रं पिण्डदानं कर्त्तव्यम्। चतुर्थं पिण्डं तूष्णीं दद्यादित्यापस्तम्बो मन्यते। स च वैकल्पिको बोद्धव्यः। यदि पितृपितामहप्रपितामहानां नामानि यजमानो न जानीयात्तदा 'स्वधा पितृभ्यः पृथिविषद्भ्यः' इति प्रथमं पिण्डं 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति द्वितीयं 'स्वधा पितृभ्यो दिविषद्भ्यः' इति च तृतीयं पिण्डं दद्यात्। आश्वलायनोऽपि[2] पित्रादीनां नामाज्ञाने तत्र ततादयः शब्दाः प्रयोक्तव्या इति मन्यते। यदि यजमानो द्विपितृकः स्यात्तर्हि एकस्मिन्नेव पिण्डे द्वौ द्वौ नामतो निर्दिश्य पिण्डान् प्रयच्छेत्।

अस्मिन् पिण्डदानविषये आश्वलायन आचार्यत्रयस्य मतमुल्लिख्य स्वकीयं मतमुपसंहरति। तत्र गाणगारिनामक आचार्यो वदति—इयं तु क्रिया पित्राद्यर्थं क्रियते। न च निपृतपिण्डो जीवांस्तर्पयति। तस्माद् गन्धमाल्यादिभिर्जीवतो पित्रादीन् प्रत्यक्षमेवार्चयेत्। तौल्वलिराचार्यो जीवद्भ्योऽपि पित्रादिभ्यः पिण्डदानं कर्त्तव्यमिति मन्यते। पिण्डपितृयज्ञरूपाया क्रियाया उद्देश्यकोटौ पितरः सन्ति। अर्थात् पितॄनुद्दिश्य इदं

1, आ० श्रौ० १।१।११

2. आ० श्रौ० २।६।२४

कर्म क्रियते । कर्मसु उद्देश्यभूता देवता अङ्गत्वेन परिगण्यन्ते । तासां प्रीतिः कर्मद्वारा न सम्पाद्यते । देवताधिकरणसिद्धान्तेन कर्माङ्गदेवतानां प्रीत्याद्यनङ्गीकारात् । अतः क्रियागुणत्वात् पितृणां ते जीवन्तो वा भवन्तु प्रेता वा तेभ्य एव सर्वेभ्यः पिण्डदानं कर्तव्यमिति तस्याभिप्रायः । गौतमाचार्यस्तु इदं मतद्वयं दूषयित्वा स्वकीयं मतमाचष्टे । 'प्रेतेभ्यो दद्यात्' इति श्रुतेः क्रियाया मरणार्थत्वात् यस्य पित्रादयः सर्वे जीवन्ति सोऽपि प्रपितामहात् परेभ्यस्त्रिभ्यः पिण्डं दद्यात् । तत्रादौ आश्वलायनो गौतममतं खण्डयति । 'पित्रे ददाति, पितामहाय ददाति, प्रपितामहाय ददाति' इति श्रुतिबलात् परेषामनधिकारप्रसङ्गात् प्रपितामहात् परेभ्यः पिण्डनिपरणं कर्तव्यम् । 'न प्रत्यक्षम्'[1] इत्यनेन गाणगारेर्मतं सूत्रकारेण निरस्तम् । 'प्रेतेभ्यो ददाति' इति श्रुतेः जीवानामनधिकारप्रसङ्गात् प्रत्यक्षार्चनं न सम्भवति । 'न जीवेभ्यो निपृणीयात्'[2] इति सूत्रेण तौल्वलिमतमपि निराकृतम् । इहाप्यनधिकारादेव जीवेभ्यो निपरणं न कर्तव्यम् । एवं गौतमगाणगारितौल्वलीनां मतानि क्रमेण दूषयित्वा सूत्रकारः स्वमतमभिदधाति । यस्य पिता जीवति तेनोत्तराभ्यां मृताभ्यामपि पिण्डदानं न कर्तव्यम् । यस्य पितामहो जीवति इतरौ मृतौ तेन पित्रे एव पिण्डदानं कर्तव्यम् । यस्य प्रपितामहो जीवति इतरौ मृतौ तेन पूर्वाभ्यां द्वाभ्यामेव पिण्डदानं कर्तव्यम् । तत्र जीवानां पिण्डदानमन्त्रेण स्वाहाकारान्तेन च पाणिना होमः कर्तव्यः । यस्य सर्वे पित्रादयो जीवन्ति तेन सर्वे पिण्डा होतव्याः । अर्थात् जीवाय हुत्वा उत्तरस्मै प्रेताय पिण्डनिपरणं कर्तव्यम् । आपस्तम्बोऽपि[3] जीवपितुर्यजमानस्य पिण्डदानं निषिध्य तत्र होमकरणमभिप्रैति ।

---

1 आ० श्रौ० २।६।२०

2 आ० श्रौ० २।६।२०

3 आप० श्रौ० १।९।३

पिण्डदानात् परं पित्रादीनुपस्थाय[1] 'अत्र पितरो यथाभागं मन्दध्वम्'[2] इत्युक्त्वा पराङावर्त्तेत । अर्थात् दक्षिणामुखः सन् पिण्डं प्रदाय उदङ्मुखः पर्यावर्त्तेत । औष्ण्यवशात् पिण्डेषु यावदूष्मा निर्गच्छति तावत्पर्यन्तमुदङ्मुख एवोपासीत । निवृत्तेऽनिवृत्ते वोष्मणि 'अमीमदन्त पितरः सोम्याः' इति मन्त्रेण पुनः पर्यावर्तेत । अभिपर्यावृत्य 'अमीमदन्त पितरो यथाभागमावृषायीषत' इति मन्त्रेण हुतान् पिण्डाननुमन्त्रयेत । ततः स्थालीस्थं शेषं यजमानोऽवजिघ्रेत् । यस्तु यजमानो रोगाक्रान्तः, यश्च अन्नाद्यकामः, यश्च भोजनाय पर्याप्तः सन् भोक्तुं न शक्नुयात्, ते सर्वेऽपि पिण्डान् भक्षयेयुः । आश्वलायनस्तु[3] यदि क्षयादिमहारोगेणाक्रान्तः स्यात्तर्हि पिण्डं प्राश्नीयात्तेन रोगान्मुक्तो वा भवेत् मरणं वा गच्छेदिति वदति । पिण्डशेषमवघ्राय पूर्ववन्मार्जयित्वा एकस्फ्यायां लेखाया त्रीनुदकाञ्जलीन् प्रदाय आञ्जनाभ्यञ्जनवासांसि पित्रादीनां कृते पिण्डस्योपरि दद्यात् । यदि तेषां नामानि न जानीयात्तदा 'आञ्जतां मम पितरः, आञ्जतां मम पितामहाः, आञ्जतां मम प्रपितामहाः' इत्यनेनाञ्जनं दद्यात् । एवमभ्यञ्जनेऽपि 'आञ्जताम्'इत्यस्य 'अभ्यञ्जताम्'इत्यनेन सन्नमनं कर्त्तव्यम् । तदनन्तरं वाससो दशां छित्त्वा अविलोमानि वा पिण्डानामुपरि निदध्यात् । यदि पञ्चाशत ऊर्ध्वं वयः स्यात्तदा स्वकीयं लोम छित्त्वा निदध्यात् । 'उत्तर आयुषि स्वं लोम'[4] इति सूत्रयन्नापस्तम्ब आश्वलायनमतमेवाङ्गीकरोति । अपगतोष्मसु पिण्डेषु 'नमो वः पितरो रसाय' इति तेभ्यो नमस्कुर्वन् जपेत् । ततः

1 'यन्मे माता प्रममाद यच्चचारानानुव्रतम् । तन्मे रेतः पिता वृङ्क्तां भासुरन्योऽवपद्यताम् । पितृभ्यः स्वधाविभ्यः स्वधा नमः, पितामहेभ्यः स्वधाविभ्यः स्वधा नमः, प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नमः' इत्युपस्थानमन्त्रः ।

2 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इत्याश्वलायनोक्तोऽनुमन्त्रणमन्त्रः ।

3 आ० श्रौ० २।७।१७

4 आप० श्रौ० १।१०।१ ; तै० ब्रा० १।३।१०

पितृनुपस्थाय[1] उदकं निनीय[2] 'मनोऽन्वाहुवामहे'[3] इति त्रिभिर्मनस्वतीभिर्ऋग्भिरुपस्थानं कृत्वा 'उत्तिष्ठत पितरः'[4]इत्यादिना पितृनुत्थाप्य 'परेत पितरः सोम्याः'[5] इत्यनेन तान् प्रवाहयेत् । तदनन्तरं यज्ञोपवीती सन् 'प्रजापते न त्वदेतानि'[6] इति मन्त्रेण गार्हपत्यदेशं गत्वा 'यदन्तरिक्षम्'[7]

---

1 'गृहान्नः पितरो दत्त सदो वः पितरो देष्म' इत्यापस्तम्बोक्त उपस्थानमन्त्रः ।

2 'ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन्' इति निनयनमन्त्रः ।

3 'मनो न्वा हुवामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः' (तै० सं० १।८।५।२) इति प्रथमा । 'आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे' इति द्वितीया । 'पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीव व्रातं सचेमहि' इति तृतीया । इदमृक्त्रयमृग्वेदसंहितायामपि उपलभ्यते (ऋ० सं० १०।५७।३-५) । 'नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम' इत्युपस्थानमन्त्र आश्वलायनोक्तो वेदितव्यः ।

4 'उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनुवेता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु' इत्युपस्थापनमन्त्रः ।

5 'परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्रौँ अपीत यमेन ये सधमादं मदन्ति' (तै० सं० १।८।५।२) इत्यापस्तम्बोक्तः प्रवाहणमन्त्रः । आश्वलायनस्तु 'परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत' इति भिन्नं प्रवाहणमन्त्रं पठति । प्रवाहणात् परं तन्मतेदक्षिणाग्नेरुपस्थानं कर्तव्यम् ।

6 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्' (तै० सं० ३।२।५।६) इति सम्पूर्णो मन्त्रः ।

7 'यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ।।' (तै० सं० १।८।५।३) इत्यापस्तम्बोक्तो गार्हपत्योपस्थानमन्त्रः । आश्वलायनस्तु इममेव मन्त्रं 'दुरिता यानि चकृम' इत्यंशवर्जमविकलमेव पठति ।

इति पङ्क्तिछन्दस्कयर्चा गार्हपत्यमुपतिष्ठेत । ततो मध्यमं पिण्डं स्वपत्न्यै प्रजाकामायै भक्षणाय दद्यात् । सा च तं गृहीत्वा[1] 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदि'[2]ति तं भक्षयेत् । अवशिष्टानामेकं पिण्डं यजमानो भक्षयेत् न वेत्यापस्तम्बो वदति । आश्वलायनस्तु मध्यमपिण्डं वर्जयित्वा इतरयोरप्सु प्रक्षेपमतिप्रणीते वा दाहनमभिप्रैति । यस्य वाऽन्नेच्छाभावो निर्निमित्तकः स एतावितरौ भक्षयेदित्यपि तस्याशयः । ततः कुशानग्नौ प्रक्षिप्य उल्मुकमपि दक्षिणाग्नावेव पुनः प्रत्यस्य पात्राणि प्रोक्ष्य गृह्णीयात् । अनेनैव प्रकारेण पिण्डपितृयज्ञः परिसमाप्यते ।

यश्चानाहिताग्निः पितृयज्ञं कर्त्तुमिच्छति तस्यापि एवंविहितः कर्त्तव्यः । तस्य दक्षिणाग्निस्थानीये औपासने श्रपणहोमौ भवतः । औपासने एव श्रपयित्वा ततोऽग्निं दक्षिणाप्राञ्चं प्रणीय तस्मिन् वा जुहुयात् । आश्वलायनोऽपि[3] औपासने श्रपयित्वा अतिप्रणीते तस्य होममिच्छति । यस्मिन्नौपासनेऽतिप्रणीते वा जुहुयात्तमेव 'यदन्तरिक्षमि'ति मन्त्रेणोपतिष्ठेत । तत्र त्वग्नावुपस्थीयमाने मन्त्रगतो गार्हपत्यशब्दो लुप्येत । कारणन्तु इदमेव—गार्हपत्यशब्दस्याधानसंस्कारनिमित्तकत्वात्तस्य चाग्नेस्तदाभावादिति । आश्वलायनसूत्रवृत्तिकृत् गार्ग्यनारायणोऽपि एवं वदति—'यदन्तरिक्षमित्येतस्मिन् म[illegible] गार्हपत्यशब्द उद्धर्तव्यस्तच्छब्दप्रवृत्तिनिमित्तस्य संस्कारस्यात्राभावादि'[4]ति । अत्र स्थाल्यादीनां पात्राणां द्वे द्वे गृहीत्वा देशान्तरे स्थापनं कुर्यात् । एकस्यातिरिक्तस्य तृणेन द्वित्वं सम्पाद्योत्सर्गः कर्तव्य इत्यधिकं किञ्चिदाश्वलायनो विदधाति । अन्यत् सर्वं प्राग्वदेव कर्तव्यमिति ।

---

1 ग्रहणकाले 'वीरं मे दत्त पितरः' इति मन्त्रं पठेत् ।

2 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथाऽयमरपा असदि'ति ईषदविकृतो मन्त्र आश्वलायनेन पठितः । तन्मते तु पत्नी मन्त्रमिमं ब्रूयात्, यजमानस्तां मध्यमपिण्डं प्राशयेत् ।

3 आ० श्रौ० २।७।१८-१९

4 आ० श्रौ० वृ० २।७।१९